## विरामोऽवसानम् (१. ४. ११०)

**वर्णानां विरामोऽवसानसंज्ञः ।**

इति प्रक्रियासर्वस्वे संज्ञाखण्डः ॥

---

## अथ परिभाषाखण्डः ।

## इको गुणवृद्धी (१. १. ३)

**गुणः स्याद् वृद्धिः स्यादिति च विधाविक एव स्थाने स्यात् ।**

---

नीय' इति भाष्यकारोक्तेः सान्तावपि ॥ **विरामोऽवसानम् । विराम** इति । विरतिर्विरामः । विरम्यतेऽनेनेति विरामः । भावे करणे वा घञ् । अथ कवि-वर्ण्यग्रन्थनामाख्यानपूर्वकं खण्डसमाप्तिं कथयति — **इतीति** । इतिशब्दः परि-समाप्तौ । **प्रक्रियासर्वस्व** इति । प्रकृतिप्रत्ययविभागेन शब्दानां व्युत्पादनं प्रक्रिया । 'कृञः श चे'ति भावे शप्रत्ययः । तासां सर्वस्वम् । स्वशब्द आत्म-पर्यायः । अत्र तु स्वरूपपरः । प्रक्रियाणामशेषस्वरूपमित्यर्थः । तत्प्रतिपादको ग्रन्थोऽपि प्रक्रियासर्वस्वम् । प्रतिपाद्यप्रतिपादकयोरैक्यमिच्छन्ति कवयः, रघु-वंशकुमारसम्भवादौ यथा । अतः प्रक्रियासर्वस्व इत्यनेन वर्ण्यग्रन्थनामनी उक्ते । **संज्ञाखण्ड** इति । समाप्त इत्यर्थः । एवं सर्वत्र द्रष्टव्यम् ।

कामं वक्तव्यांशा विद्यन्ते तत्र तत्र भूयांसः ।
हेतुस्तत्राशक्तिर्विस्तरभीर्वा समर्थ्यतां विबुधाः ! ॥

इति सर्वस्वप्रकाशिकायां संज्ञाखण्डः ॥

---

### अथ परिभाषाखण्डः ।

**अथ परिभाषेति** । संज्ञापरिभाषयोर्भेदस्तु आवर्तिन्यः संज्ञाः, परिभाषा पुनरेकदेशस्था सर्वं शास्त्रमभिज्वलयतीति ।

**इको गुणवृद्धी । गुणः स्याद् वृद्धिः स्यादिति च विधाविति** ।

---

१. 'नामभावोऽव' ग. पाठः.

## षष्ठी स्थानेयोगा (१. १. ४९)

इह शास्त्रे षष्ठी स्थानसम्बन्धार्थैव। 'एरुः' (३-४-८६) इत्युक्ता विकारस्य स्थाने उकारः स्यात्, न पूर्वं परं वा।

## आद्यन्तौ टकितौ (१. १. ४६)

टित्कितावागमौ[1] तु क्रमादाद्यन्तांशौ[2] स्तः।

## स्थानेऽन्तरतमः (१. १. ५०)

---

गुणशब्दं वृद्धिशब्दं चोच्चार्य गुणवृद्धयोर्विधान इत्यर्थः। एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुण इति वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न। 'दिव औत्' द्यौः। 'पथिमथ्यृभुक्षामात्' पन्थाः। 'त्यदादीनामः' इमम्। इक एव स्थान इति। ततश्च, याता ग्लायति उम्भिता अत्र 'सार्वधातुकार्धधातुकयोरि'ति गुण आत्सन्ध्यक्षरव्यञ्जनानां न।

उपस्थितौ सहैतस्या अलोऽन्त्यपरिभाषया।
तच्छेषत्वापवादत्वपक्षयोर्दोषदर्शनात्॥

पदोपस्थानपक्षोऽत्र भाष्ये सिद्धान्तितस्त्वयम्।
इह नो विस्तरभिया तत्प्रपञ्चः प्रदर्शितः॥

**षष्ठी स्थानेयोगा**। स्थानेन योगो यस्याः सा स्थानेयोगा। निपातनादेत्वम्। स्थानं प्रसङ्गः। योगः सम्बन्धः। तदेतदाह—**स्थानसम्बन्धार्थेति**। स्थानमेव सम्बन्धः स्थानसम्बन्धः। स्थानसम्बन्धोऽर्थो यस्याः सेत्यर्थः। 'ऊदुपधाया गोह' इत्यादौ अवयवादिसम्बन्धविशेषस्य यत्र स्फुटप्रतीतिस्तत्रेयं परिभाषा नोपतिष्ठते। परिभाषाणामनियमे नियन्तुं प्रवृत्तेः। अतो'ऽस्तेर्भूरि'त्यादौ यत्र आनन्तर्याद्यनेकसम्बन्धप्रसङ्गस्तत्रैवायं नियम इति ज्ञेयम्॥ **स्थानेऽन्तर-**

---

१. 'ह तु स्था' ग. पाठः. २. 'उः स्या' क. ख. घ. ङ. च. छ. पाठः. ३. 'मौ षष्ठीनिर्दिष्टस्याद्य' छ. पाठः. ४. 'न्ताङ्गौ स्तः' ग. पाठः.

स्थाने भवत्स्वादेशेषु सदृशतम एव स्यात् । उवर्णस्य गुण इत्युक्ते स्थानसाम्यादोकारः इत्यादि ।

### अनेकाल् शित् सर्वस्य (१. १. ५५)

अनेकाक्षरः शिच्चादेशः सर्वस्य स्यात् ।

### अलोऽन्त्यस्य (१. १. ५२)

अनेकाल्शिद्भ्योऽन्य आदेशोऽन्त्याक्षरस्य स्यात् । समो रुः स्यादित्युक्ते मकारस्य रुः ।

### प्रत्ययलोपे प्रत्ययलक्षणम् (१. १. ६२)

प्रत्यये लुप्ते प्रत्ययहेतुकमेव कार्यं स्यात् । रमा, गोपीत्यादौ सुलोपेऽपि[२] सुबन्तत्वेन पदत्वमस्तीत्यादि ।

---

तमः । अन्तरशब्दः सदृशपर्याय इत्याह — सदृशतम इति । सादृश्यं च चतुर्धा । स्थानतोऽर्थतो गुणतः प्रमाणतश्चेति । स्थानत आन्तर्यं मूल एवोदाहृतम् । अर्थतः — वतण्डी युवतिः वातण्ड्ययुवतिः । पुंवद्भावे अन्तरतमः पुंशब्दोऽतिदिश्यते । गुणतः—पाकः । 'चजोः कुघिण्यतोरि'ति चकारस्याल्पप्राणस्य घोषवतस्तादृश एव ककारः । प्रमाणतः — अमुष्मै अमूभ्याम् । 'अदसोऽसेर्दादुदो मः' इति ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः ॥ **अलोऽन्त्यस्य । अनेकाल्शिद्भ्योऽन्य** इति । 'अनेकाल् शित् सर्वस्ये'ति योगोऽस्यापवाद इति भावः । अल इति षष्ठी । तद्विशेषणमन्त्यस्येत्येतदित्याह — **अन्त्याक्षरस्येति** । इह 'षष्ठी स्थानेयोगे'त्यनुवर्त्य स्थानषष्ठीनिर्दिष्टस्य य आदेशः सोऽन्त्याक्षरस्येति व्याख्येयम् । अन्यथा 'आर्धधातुकस्येड् वलादेरि'त्यत्रास्य प्रवृत्तौ टित्त्वादार्धधातुकान्त्याक्षरस्यादेरिट् स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम्** । पुनः प्रत्ययग्रहणसामर्थ्यान्नियमो लभ्यत इत्याह — **प्रत्ययहेतुकमेवेति** । यत्कार्यं प्रति(प ? प्रत्य)यस्यासाधारणं रूपं सुप्(त्व)तिङ्त्वादि निमित्ततयाश्रीयते तदेव प्रत्ययलक्षणेन भवतीत्यर्थः । तेन सुयशा इत्यत्र सोः प्रत्ययलक्षणेन विसर्जनीयस्य सो न । खत्वस्य प्रत्ययाप्रत्ययसाधारणत्वात् ॥

---

१. 'ल् शि', २. 'ल्लो' ग. पाठः.

### तस्मिन्निति निर्दिष्टे पूर्वस्य (१. १. ६६)

तस्मिन्नित्युक्तौ ततः पूर्वस्यैव[1] कार्यं स्यात् ।

### तस्मादित्युत्तरस्य (१. १. ६७)

पञ्चम्योक्तौ परस्यैव[2] कार्यं स्यात् ।

### स्वं रूपं शब्दस्याशब्दसंज्ञा (१. १. ६८)

वृद्ध्यादिशब्दशास्त्रोक्तसंज्ञातोऽन्येषां शब्दानां स्वरूपमेव ग्राह्यं, नत्वर्थग्रहः । 'अग्नेर्ढक्' (४-२-३३) इत्युक्ते पावकादेर्न । क्वचित्[3] त्वर्थग्रहोऽस्ति । स तत्र वक्ष्यते ।

### येन विधिस्तदन्तस्य (१. १. ७२)

येन विशेषणेन विधिः क्रियते । स तदन्तस्येति ज्ञेयम् । 'अचो यत्' (३-१-९७) इत्युक्तेऽजन्ताद् धातोरित्यर्थः ।

---

**तस्मिन्निति निर्दिष्टे पूर्वस्य । तस्मिन्नित्युक्ताविति** । तस्मिन्निति न स्वरूपपरम् । किन्त्वर्थपरम्, इतिशब्दप्रयोगात् । अतः सामान्यवाचिना सर्वनाम्ना अचि हलि इत्यादयः सर्वे विशेषा गृह्यन्ते । तेन सप्तम्यन्तोक्तावित्यर्थः । **तत इति** । सप्तमीनिर्दिष्टादित्यर्थः । **पूर्वस्य** अनन्तरस्य पूर्वस्येति ज्ञेयम् । निरित्युपसर्गग्रहणमानन्तयार्थमित्याहुः । तेन अग्निचिदत्रेत्यादौ व्यवहितस्येको यणादेशो न ॥ **स्वं रूपं शब्दस्याशब्दसंज्ञा । पावकादेर्नेति** । 'अग्नेर्ढग्' इत्युक्ते लोकवदर्थ एव तावत् प्रतीयते । अर्थे च ढकः सं(भ)वो नास्ति । अतस्तद्वाचिनां सर्वेषामपि प्रसङ्गः । स मा भूत्, उपात्तादग्निशब्दादेव यथा स्यादिति नियमार्थेयं परिभाषेत्यर्थः । **क्वचित्त्विति** । 'स्वे पुषः' इत्यादाविति भावः ॥ **येन विधिस्तदन्तस्य । तदन्तस्येति** । सः अन्तो यस्येति बहुव्रीहिः । अत्र विशेष्यस्यान्यपदार्थत्वम् । इह वार्तिकानि — **समासप्रत्ययविधौ प्रतिषेधः** । समासविधौ प्रत्ययविधौ च तदन्तविधेः प्रतिषेधो वक्तव्य इत्यर्थः । तेन कृष्णं परमश्रितः इत्यत्र 'द्वितीया श्रिते'ति समासो न । प्रत्ययविधौ सूत्रनडस्यापत्यम् अत्र 'नडादिभ्य' इति फक् न । अस्यापवादः **'उगिद्वर्णग्रहण-**

---

१. 'व स्या' क. ख. पाठः. २. 'व स्या' घ. छ. पाठः. ३. 'चिदर्थं' ग. पाठः.

## अचश्च (१. २. २८)

ह्रस्वदीर्घप्लुता विधीयमाना अचः स्थान एव स्युः ।

## यथासङ्ख्यमनुदेशः समानाम् (१. ३. १०)

समसङ्ख्यानां यथाक्रममेव विधिः स्यात् । 'सर्वपुरुषाभ्यां णढञौ' (५-१-१०) इत्युक्ते सर्वाण्णः पुरुषाड्ढञ् ।

## स्वरितेनाधिकारः (१. ३. ११)

स्वरितेन चिह्नेनाधिकारो ज्ञेयः । धातोरित्याद्यधिक्रियमाणानां चिह्नतया स्वरितत्वं प्रतिज्ञायत इत्यर्थः ।

सूत्रेष्वनुक्तं सर्वत्र प्राक्सूत्रेभ्योऽनुवर्तते ।
तद् व्याख्याशरणं प्रायः स्वरितत्वं तु दुर्गमम् ॥

अतएव 'अपेक्षातोऽधिकार' इति भोजोक्तिः ।

---

वर्जम्' इति । अतिभवती । 'उगितश्चे'ति ङीप् तदन्ता(व ? द)पि । वर्णग्रहणे दाक्षिः प्लाक्षिः । 'अत इञ्' । यस्मिन् विधिस्तदादावल्ग्रहणे । अल्ग्रहणेषु यस्मिन् विधिस्तदादाविति वक्तव्यम् । सौत्रस्य तदन्तविधेरपवादोऽयम् । श्रियः भ्रुवः । 'अचि श्नुधात्वि'तीयङुवङौ सिध्यतः ॥ अचश्च । 'इको गुणवृद्धी' इत्यनेन तुल्यमेतत् । इह पूर्वसूत्रादजित्यनुवर्तते । तत्सामर्थ्याद् ह्रस्वा(दि)भिः संज्ञाभिर्यत्राज्विधिस्तत्रैवास्य प्रवृत्तिः । तेनेह न । द्यौः । पन्थाः । इमम् ॥ यथासङ्ख्यमनुदेशः समानाम् । सङ्ख्याशब्देन क्रमो लक्ष(ण ? णीय) इत्याह — यथाक्रममिति । वीप्सायामव्ययीभावः । अनुदेशशब्दार्थमाह — विधिरिति । अनुः पश्चादर्थे । दिशिरुच्चारणक्रियः । अनुदिश्यत इत्यनुदेशः । 'अकर्तरि च कारके' इति कर्मणि घञ् ॥ स्वरितेनाधिकारः । अधिकारो विनियोगः । प्रतिज्ञायत इति । प्रतिज्ञा तु व्याख्यागम्या ।

यद्येवं व्याख्यानेनैवाधिकारोऽवगन्तव्यः लाघवादित्याह — सूत्रेष्वनुक्तमित्यादिना । तद् अनुवर्तनम् । प्राय इति । यद्यपि 'स्तु स्थिरे' 'भावे' इत्यादौ घञोऽनुवृत्तिः सुगमा, तथापि 'आक्रोशेऽवन्योर्ग्रह' इत्यादौ घञ् तु

**विप्रतिषेधे परं कार्यम् (१. ४. २)**

**तुल्यबलयोः कार्ययोर्विरोधे परसूत्रोक्तं[1] कार्यमेव स्यात् ।**

**समर्थः पदविधिः (२. १. १)**

**पदानां समासादिविधिः सम्बद्धार्थ एव स्यात् । अन्विताथानां पदानामेवेत्यर्थः । प्राक्तनपरिभाषां तु निराचष्टे पाणिनिः —**

**प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् (१. २. ५६)**

---

व्याख्यानेनैव गम्यते । पूर्वसूत्रे (घि ? ङ)नुणः प्रकृतत्वादिति भावः (अ ? त)थाच न्यायः 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इति ॥

**विप्रतिषेधे परं कार्यम्** । विप्रतिपूर्वात् सेधतेर्घञ् । 'उपसर्गात् सुनोती'ति षत्वम् । उपसर्गवशाच्च विरोधार्थत्वम् । कार्यमित्यत्र 'अर्हे कृत्यतृचश्चे'ति अर्हार्थे कृत्यप्रत्ययः । तेन तुल्यबलविरोध इति पर्यवस्यति । न ह्यपवादादीनां सन्निधौ उत्सर्गादीनां कृत्यर्हत्वं, तैर्बाधितत्वात् । तदेतत् सर्वमभिप्रेत्याह — **तुल्यबलयोः कार्ययोर्विरोध** इति । नित्यान्तरङ्गापवादेषु तुल्यबलता नास्तीति तेष्वियं परिभाषा न प्रवर्तते । अत्र प्रत्युदाहरणानि न्यायखण्डे द्रष्टव्यानि । उदाहरणं तु वृक्षेभ्यः । अत्र वृक्षाभ्यां वृक्षेष्वित्यत्र सावकाशयोरात्वैत्वयोः परत्वादेत्वमेव ॥ **समर्थः पदविधिः** । **समासादिविधिरिति** । अत्रादिशब्देन कृत्तद्धितसनादयो गृह्यन्ते । **सम्बद्धार्थ** इति । सम्बद्धोऽर्थेन समर्थः । 'अवादयः क्रुष्टाद्यर्थे तृतीयये'ति समासः । पदविधिरिति किम् । वर्णविधौ मा भूत् । तिष्ठतु दध्यशान त्वं शाकेन । अत्र यणादेशः स्यादेव । **प्राक्तनपरिभाषामिति** । प्राक्तनत्वं च प्रत्याख्यानादेवावसीयते । नहि स्वकृतायाः स्वेनैव प्रत्याख्यानमुचितम् ।

"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।"

इति न्यायादिति भावः । **प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्** । अशिष्यमित्यनुवर्तते । अर्थस्य वचनमर्थवचनम् । प्रधानप्रत्यययोरर्थवचनं प्रधानप्रत्ययार्थवचनम् ॥

---

१. 'त्क्तमे' क. ख. घ. ङ. च. छ. पाठः. २. 'न्था' क. ग. ङ. च. छ. पाठः.

प्रधानार्थं सह ब्रूतो द्वे प्रधानोपसर्जने ।
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययावुभौ ॥
इत्थमर्थाभिधानं यदनुशिष्टं पुरातनैः ।
तत्तु लोकप्रमाणत्वादशिष्यमिति पाणिनिः[1] ॥
न राजपुरुषस्यार्थो[2] राजा च पुरुषः पृथक् ।
विशिष्टः पुरुषो लोके द्वयोरर्थोऽवगम्यते ॥
तथौपगव इत्यत्र नापत्यं नोपगुः पृथक् ।
किन्तूपगुविशिष्टं खल्वपत्यं मन्यते जनः ॥

कालोपसर्जने च तुल्यम् (१. २. ५७)

योग्यमुत्थानमारभ्य योग्यात् प्रस्वपनात् पुरः ।
कालोऽद्यतन इत्यादि यत् कालपरिभाषणम् ॥
यच्चोक्तमप्रधानत्वमुपसर्जनलक्षणम् ।
ते च प्राग्वदशिष्ये स्तो लोकसिद्धत्वहेतुतः ॥

अतएव हेतोर्मत्वर्थे बहुव्रीहिरुत्तरपदार्थप्रधानस्तत्पुरुष इत्याद्यपि न परिभाष्यमिति मन्यते ॥

इति प्रक्रियासर्वस्वे परिभाषाखण्डः ॥

---

प्राक्तनपरिभाषामाह — **प्रधानेति** । प्रधानोपसर्जने द्वे सह प्रधानार्थं ब्रूतः, प्रकृतिप्रत्ययावुभौ सह प्रत्ययार्थं ब्रूतः इति योजना ॥

सूत्रे अन्यशब्देन लोको विवक्षित इत्याह — **लोकप्रमाणत्वादिति** । अशिष्यम् अनुपदेश्यम् ।

लोकसिद्धत्वमुदाहरणमुखेन स्पष्टीकरोति— **न राजेति** । विशिष्टः राजसम्बन्धविशिष्ट इत्यर्थः ॥

**कालोपसर्जने च तुल्यम्** ।

तुल्यमित्येतद् व्याचष्टे — **प्राग्वदशिष्ये स्त इति** ।

**अतएव हेतोः** लोकसिद्धत्वहेतोरित्यर्थः । मन्यते पाणिनिरिति शेषः ॥

इति सर्वस्वप्रकाशिकायां परिभाषाखण्डः ॥

---

१. 'सिद्धत्वा' छ. पाठः. २. 'षशब्दस्या' ग. पाठः.

## अथ संहिताखण्डः ।

### संहितायाम् (६. १. ७२)

इतः परं संहितायां कार्यमुच्यते । कंस छेदी इति स्थिते,

### छे च (६. १. ७३)

संहितायां छकारे परे ह्रस्वस्य तुगागमः स्यात् । किस्वादन्ते । कंस तुक् छेदी । ककारस्य 'हलन्त्यम्' (१-३-३) इतीत्त्वाल्लोपः । उकार उक्त्यर्थः । कंस त् छेदी ।

### स्तोः श्चुना श्चुः (८. ४. ४०)

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गावादेशौ स्तः । 'स्थानेऽन्तरतमः' (१-१-५०) इति तकारस्य चः । कंसच् छेदी ।

### अनचि च (८. ४. ४७)

अचः परस्य यरोऽनचि परे द्वित्वं स्यात् । इति चस्य द्वित्वम् । कंसच्च् छेदी । सकृत्प्रवृत्त्या शास्त्रस्य चरितार्थत्वात् पुनर्द्वित्वं न । तेन द्वावेव चकारौ ।

---

संहितायाम् । 'अनुदात्तं पदमेकवर्जम्' इत्येतत्पर्यन्तं संहिताधिकारः ॥ तकारस्य च इति । अत्र श्चुत्वस्यासिद्धत्वात् पूर्वं जश्त्वेन दकारे कृते ततश्चत्वस्यासिद्धत्वाज् जश्त्वेन जः । पुनश्चर्त्वेन चः इति केचिदाहुः । तत् सम्भवप्रदर्शनमात्रम् । रूपसिद्धौ विशेषाभावादिह नोक्तम् ॥ अनचि च । द्वित्वं स्यादिति । एतच्च वृत्त्यनुसारेणोक्तम् । 'नाज्झलावि'ति सूत्रे कैयटस्त्वाह— 'यरोऽनुनासिक इति सूत्राद् वाग्रहणमनुवर्तते' इति । माधवेन च विक-

---

१. 'दी । श्चि' ङ. पाठः.

झरो झरि सवर्णे (८. ४. ६५)

हलः परस्य झरः सवर्णे झरि परे लोपः स्यात्। इति द्वितीयचलोपः। कंसच् छेदीति। श्लिष्टोच्चारणं कंसच्छेदी।

झरो झरीति लोपोऽयं वेति वृत्तौ तथापि तु।
नातीवोच्चारणे भेदो नित्योऽयं कौमुदीमते॥

चे छिद्यते इति स्थिते।

दीर्घात् (६. १. ७५)

दीर्घाच्छे परे संहितायां दीर्घस्य तुक् स्यात्। चे तुक् छिद्यते। शेषं प्राग्वत्। चेच्छिद्यते। भू छाया इति स्थिते।

पदान्ताद्वा (६. १. ७६)

पदान्ताद् दीर्घात् छे परे दीर्घस्य तुग्वा स्यात्। भू तुक् छाया। तुकः शोधना प्राग्वत्। भूच्छाया भूछाया।

समर्थत्वात् पदविधेर्विकल्पोऽयं पदाश्रयः।
अनन्वितार्थयोर्न स्याद् रमा सेव्याच्छलं त्यज॥

अत्र 'दीर्घाद्' (६-१-७५) इति नित्यं तुगेव। आङ् छादयति माङ्

---

त्पपक्षमाश्रित्य आस्त इत्यत्र सकारद्वित्वविकल्प उक्तः॥ झरो झरि सवर्णे। अत्र सवर्णग्रहणाद् यथासङ्ख्यं न भवति। तेन 'पिष्लृ सञ्चूर्णने' इत्यस्माल्लोटि सिपि पिण्ढि। अत्र ढकारे परे (ढ? ड)कारस्य लोपो भवत्येव। कंसच्छेदीति। श्चुत्वस्यासिद्धत्वात् 'चोः कुरि'ति कुत्वं न।

वेति वृत्ताविति। माधवश्चाह—'आस्से। अत्र द्वित्वपक्षे त्रयः सकाराः। नच 'झरो झरी'ति लोपाद् द्वावेवेति मन्तव्यम्। तस्यापि विकल्पितत्वादि'ति॥

दीर्घात्। अत्र परामपि 'तस्मादित्युत्तरस्ये'ति परिभाषां बाधित्वा 'तस्मिन्नि'ति परिभाषैव प्रवर्तत इत्याह—दीर्घस्येति। अत्र तु ज्ञापकं 'सेनासुराच्छाये'ति निर्देशः। यदि छस्य तुक् स्यात् तर्हि छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रू(यते? येत)॥ पदान्ताद् वा। 'दीर्घादि'त्यस्यापवादोऽयम्। नित्यं तुगेवेति।

---

१. 'क्तिः कं', २. 'त्। तुकः' घ. पाठः.

छिदत्[1] इति स्थिते। 'हलन्त्यम्' (१-३-३) इति ङलोपः । आ छाद यति मा छिदत् । अव्ययानामपि पदत्वात् 'पदान्ताद्वा' (६-१-७६) इति वा तुकि प्राप्ते,

## आङ्माङोश्च (६. १. ७४)

आङ्माङोः छे परे नित्यं तुक् स्यात् । आच्छादयति माच्छिदत् ॥

इति तुक्सन्धिः ॥

---

## सुट् कात्पूर्वः (६. १. १३५)

इतः परं ककारात् पूर्वः सुडागम उच्यते ।
कात्पूर्वत्वं टितोऽप्युक्तं धात्वङ्गत्वनिवृत्तये ।
तेन संस्क्रियतेशब्दे संयोगादेर्गुणो नहि ॥

---

हरदत्तस्त्वाह—'प्रकृतेन दीर्घेण' पदविशेषणादेव तदन्तविधौ सिद्धे अन्तग्रहणं पदान्तविधिरयं यथा स्यात् । पदविधिर्मा भूदिति, तेन समर्थपरिभाषात्र नोपतिष्ठते' इति। **अव्ययानामिति** । तेषां लिङ्गसङ्ख्याभावेऽपि एकवचनं भवत्येव। तस्य च 'अव्ययादाप्सुप' इति लुकि प्रत्ययलक्षणेन सुबन्तत्वमिति भावः ॥ **आङ्माङोश्च** । ङिद्विशिष्टग्रहणं किम् । आच्छाया । आ छाया । स्मरणे आकारः । 'वाक्यस्मरणयोरङिदि'ति वक्ष्यते । प्रमा छन्दः । प्रपूर्वान्माङः 'आतश्चोपसर्गे' इत्यङ् ॥

इति तुक्सन्धिः ॥

**सुट् कात्पूर्वः** । अधिकारोऽयं 'पारस्करप्रभृतीनि च संज्ञायाम्' इत्येतदवधि ।

'संपर्युपेभ्यः करोतौ भूषणे' इत्यादौ ककारादावागमिनि टित्त्वादेव सुट् कात्पूर्वो लभ्यते। अतः कात्पूर्वग्रहणमनर्थकमित्याशङ्क्याह— (**कात्पूर्वत्वमिति**) । तेन सुटो धात्वङ्गत्वाभावेन । संस्क्रियतेशब्दे संस्क्रियत इत्येत-

---

1. 'त् । ह्' क. ख. ग. पाठः.

सम्पर्युपेभ्यः करोतौ भूषणे (६. १. १३७)

एभ्यो भूषणार्थे कृञि परे संहितायां कात्पूर्वः सुट् स्यात् । तुग्वदनुबन्धलोपः । सम् स् करोति ।

समः सुटि (८. ३. ५)

सुटि परे समो रुः स्यात् । 'अलोऽन्त्यस्य' (१. १. ५२) इति मस्य रुः । रोरुकारलोपः । सर् स् करोति ।

अत्रानुनासिकः पूर्वस्य तु वा (८. ३. २)

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् । इत्यकारस्य वानुनासिकत्वम् । सँर् स् करोति ।

अनुनासिकात् परोऽनुस्वारः (८. ३. ४)

रोः पूर्वस्यानुनासिकादन्यपक्षीयोऽनुस्वारागमः स्यात् । सं र् स् करोति । 'सम्पुङ्कानां रुस्थाने सकारो वाच्यः' (वा० ८-३-५) सँ स् स् करोति । सं स् स् करोति । श्लिष्टोक्तिः । सँस्स्करोति संस्स्करोति । अत्र द्वादशधा रूपं हरदत्तोक्तं विस्तरभयान्नोच्यते । परि स् करोति ।

---

स्मिन् शब्दे । 'गुणोऽर्तिसंयोगाद्योरि'ति सूत्रेण संयोगादेरङ्गस्य विहितो यो गुणः स न भवतीत्यर्थः । टित्करणं तु सुट्स्तुस्वञ्जामित्यत्र विशेषणार्थम् ॥

**अत्रानुनासिकः पूर्वस्य तु वा** । अत्राधिकारो लक्षणं वेति पक्षद्वयम् । लक्षणपक्षे तुशब्दो नावश्यक इति तदर्थो वृत्तौ नोक्तः ॥ **अनुनासिकात् परोऽनुस्वारः** । अत्रान्यशब्दमध्याहृत्य अनुनासिकादन्यो रोः पूर्वो यो वर्णस्तस्मात् परोऽनुस्वारागमः स्यादिति व्याख्यानाद् योऽर्थः सिध्यति, तमाह— **अनुनासिका(द्) अन्यपक्षीय** इति । **द्वादशधा रूप-मिति** । तथाहि — 'समो वा लोपमेके' इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव ।

---

'ते । समो वा लोपमेके । प ' ग पाठः.

### परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्

[(८. ३. ७०)

परिनिविभ्यः परेषां सेवादीनां सस्य षः स्यात् । अत्र सुट्स्तु-स्वञ्जामित्युक्तेरस्य[1] सुटः षत्वम् । परिष्करोति । 'अनचि च' (८-४-४७) इति षस्य द्वित्वम् । परिष्ष्करोति । सस्य द्वित्वम् । उपस्स्करोति । 'संस्कृतं भक्षाः' (४-२-१६) इति सूत्रोक्तेः सम्पूर्वस्याभूषणेऽपि ।

### समवाये च (६. १. १३८)

सम्पर्युपेभ्यः कृञि परे सङ्घेऽर्थे सुट् स्यात् । सर्वं प्राग्वत् । सँस्स्कुर्वन्ति । संस्स्कुर्वन्ति । परिष्कुर्वन्ति । उपस्कुर्वन्ति । सङ्घाती-भवन्तीत्यर्थः ।

### उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु (६. १. १३९)

गुणाधाने विकारेऽध्याहारे चार्थे उपात् कृञि सुट् स्यात् । कुसुमैः केशस्योपस्कुरुते । उपस्कृतं[2] गच्छति । सविकारमित्यर्थः । अध्याहारे — उपस्कृत्य[3] व्याचष्टे ।

### किरतौ लवने (६. १. १४०)

उपात् किरतौ परे लवनसम्बद्धेऽर्थे सुट् स्यात् । उपस्कारं

---

अयोगवाहानामट्सूपदेशस्योक्तत्वादनुस्वारस्याप्यच्त्वम् । तेन 'अनचि चे'ति सकारद्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । एवं षट् । एषां षण्णां 'शरः खयो द्वे भवतः' इति वार्तिकेन शर इति पञ्चमी खय इति षष्ठीति पक्षे ककारद्वित्वे द्वादश ॥ **उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु** । विकृतमेव वैकृतम् । प्रज्ञादित्वात् स्वार्थेऽणित्याह — **विकार इति** । **केशस्येति** । 'कृञः प्रतियत्ने' इति कर्मणि षष्ठी । उपस्कुरुते । 'गन्धनावक्षेपणसेवनसाहासिक्य-प्रतियत्नप्रकथनोपयोगेषु कृञ' इत्या(दिना ? )त्मनेपदम् । गुणाधानाद्यर्थाभावाद् उपकरोतीत्यत्र सुण्न ॥ **किरतौ लवने** । **लवनसम्बद्धेऽर्थ इति** । अर्थे

---

१. 'क्तस्य' क. ख. ग. घ. च. पाठः. २., ३. 'स्स्कृ' क. पाठः.

काश्मीरका लुनन्ति । विक्षिप्य लुनन्तीत्यर्थः । *'णमुलप्यत्र वाच्यः' (वा० ६-१-१४०) इति लवने णमुलन्तोऽयम् ।

### हिंसायां प्रतेश्च (६. १. १४१)

उपात् प्रतेश्च किरतौ परे हिंसार्थे सुट् स्यात् । उपस्किरति सिंहो नरम् । भूमौ विक्षिप्य हिनस्तीत्यर्थः । हिंसामात्रेऽप्यस्ति । एवं प्रतिष्किरति । प्रतेः सुटः 'उपसर्गाद्—' (८. ३. ६५) इति षत्वमिति माधवः । परिनिविभ्य एव षत्वं न प्रतेरिति हरः । प्रतिस्किरति ।

### कुस्तुम्बुरूणि जातिः (६. १. १४३)

क्लीबत्वं बहुत्वं चातन्त्रम् । कुस्तुम्बुरुरित्योषधिजातिर्निपात्यते ।

### अपरस्पराः क्रियासातत्ये[1] (६. १. १४४)

अस्मिन् द्योत्ये अपरपरशब्दस्य सुट् । अत्रापि लिङ्गाद्यतन्त्रमिति टीकासर्वस्वे । अपरस्परान् सार्थान् पश्य । अपरस्परं प्रलपितम् । अविच्छेदेन प्रवृत्तमित्यर्थः ।

### गोष्पदं सेवितासेवितप्रमाणेषु (६. १. १४५)

एष्वर्थेषु गोष्पदमिति सुट् षत्वं च । गोभिः सेवितो गोष्पदो देशः । गवामत्यन्तासम्भावितमसेवितम् । तत्र नञ्योग इष्टः । अगोष्पदान्यरण्यानि ।

---

किरत्यर्थे विक्षेपे लवनसम्बद्धे सतीत्यर्थः । वाच्य इति । आभीक्ष्ण्यादेर्णमुलर्थस्याभावात् ॥ हिंसायां प्रतेश्च । हिंसार्थ इति । हिंसाप्रयोजने विक्षेपे इत्यर्थः । हिंसामात्र इति माघः 'उरोविदारं प्रतिचस्करे नखैरि'ति ॥ कुस्तुम्बुरूणि जातिः । जातिरिति किम् । कुत्सितानि (तुम्बुरूणि) कुतुम्बुरूणि ॥ गोष्पदं सेवितासेवितप्रमाणेषु । गावः पद्यन्तेऽस्मिन्निति 'पुंसि संज्ञायाम्' इत्यधिकरणे घः । कर्तरि षष्ठ्या समासः । गोष्पदप्रतिषेधादेवागोष्पदशब्दस्य सिद्धौ अगोष्पदग्रहणमत्यन्तासम्भाविते तत्सिद्ध्यर्थमित्याह — अत्यन्तासंभावित-

---

1. 'त्ये । अप' ख. पाठः.

* वृत्तौ परमिदं दृश्यते ।

सेवितान्यत्वमात्रे तु सुडभावादगोपदम् ।
तत्राप्यगोष्पदं केचिद् वदन्तीति हरोऽब्रवीत् ॥

प्रमाणे — गोष्पदप्रमितं जलम् । एभ्योऽन्यत्र गोपदमेव ।

आस्पदं प्रतिष्ठायाम् (६. १. १४६)

प्रतिष्ठा स्थानम् ।

आश्चर्यमनित्ये (६. १. १४७)

अनित्यमित्यद्भुतं लक्ष्यते । तत्राश्चर्यमिति सुट् । अन्यत्राचर्यं कर्म ।

वर्चस्केऽवस्करः (६. १. १४८)

वर्चस्कं मलं[1] तच्छोधनसाधनं च । तद्वान् देशश्चावस्करः ।

अपस्करो रथाङ्गम् (६. १. १४९)

चक्रादन्ये रथावयवा एवमुच्यन्ते ।

विष्किरः शकुनिर्विकिरो वा (६. १. १५०)

प्रतिष्कशश्च कशेः (६. १. १५२)

प्रतिपूर्वस्य कशिधातोः पचाद्यचि प्रतिष्कशः स्यात् । स च दूतः सहायः पुरोगो वा ।

प्रस्कण्वहरिश्चन्द्रावृषी (६. १. १५३)

---

असेवितमिति । गोष्पदप्रमितमिति । अत्र गोष्पदशब्देन स्वल्पपरिमाणमुच्यते ॥ वर्चस्केऽवस्करः । वर्चस्के किम् । ब्रह्मचारिणः स्त्रियां रेतस्सेकोऽवकरः ॥ अपस्करो रथाङ्गम् । अत्र सूत्रे तृतीय उपसर्गः । पूर्वत्र सर्वम् ॥ विष्किरः शकुनिर्विकिरो वा । वावचनेनैव विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो मा भूदिति वृत्तिः । भाष्ये तु 'विष्किरः शकुनौ वेत्येव सूत्रम् ॥ प्रतिष्कशश्च कशेः । अत्र कशेरिति धातुग्रहणं प्रतेर्धात्वन्तरोपसर्गत्वे मा भूदिति । तेन प्रतिगतः कशां प्रतिकशोऽश्व इत्यत्र न ॥

---

1. 'लं तच्च त' क. ख. घ. ङ. छ. पाठः.

मस्करमस्करिणौ वेणुपरिव्राजकयोः (६. १. १५४)

मस्करो वेण्वाख्या ।

मा कर्म कृषतेत्येवं माशब्दकरणादसौ ।
मस्करीत्युच्यते भिक्षुर्नतु मस्करधारणात् ॥

कास्तीराजस्तुन्दे नगरे (६. १. १५५)

कास्तीरम् । अजस्तुन्दम् ।

कारस्करो वृक्षः (६. १. १५६)

पारस्करप्रभृतीनि च संज्ञायाम् (६. १. १५७)

पारस्करो नाम देशः, ऋषिश्च । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (वा० ६-१-१५७) क्रमाद् योज्यम् । तद् गर्ह्यकर्म करोतीति तस्करश्चोरः । बृहस्पतिर्देवताभेदः । अन्यत्र तत्करः बृहत्पतिः । बृहन्तो देवाः । 'प्रात् तुम्पतौ गवि कर्तरि' (वा० ६-१-१५७) तुम्पधातुर्हिंसार्थः । प्रस्तुम्पत्यमुं गौः । प्रस्तुम्पको गौः । 'वनस्पतिर्वृक्षे' । 'रथस्पा नद्याम्' । रथष्पेति षत्वं चाह हरः । किञ्चिन्मानं करोतीति किष्कुः । किं किं दधातीति किष्किन्धा । परश्शतम् । परस्स-

---

मस्करमस्करिणौ वेणुपरिव्राजकयोः । न तु मस्करधारणादिति । एतेन नात्र मस्करशब्दान्मत्वर्थीय इनिः, माङ्युपपदे कृञस्ताच्छीलिको णिनिः माङो ह्रस्वत्वं सुट् च निपात्यत इत्युक्तम् ॥ पारस्करप्रभृतीनि च संज्ञायाम् । तद्बृहतोरित्यादि । गणसूत्रम् । सुट् तलोप इत्यत्र 'झरो झरी'ति लोपेन दकारोऽपि निर्दिश्यते । यथासंख्येन तदित्यत्र दकारस्य, बृहदित्यत्र तकारस्य लोप इति ज्ञेयम् । प्रात् तुम्पतौ । प्रशब्दात् तुम्पतौ परतः सुट् स्याद्,

हस्नम् । प्रायश्चित्तम् । प्रायश्चित्तिः । वाचस्पतिः । दिवस्पतिः । इत्या-
द्याकृतिगणः ।

इति सुट्सन्धिः ॥

---

सुधी अर्घ्यः, मधु अरिः, पितृ उक्त्या, गम्लृ आह इति स्थिते

इको यणचि (६. १. ७७)

संहितायामचि परे इकः स्थाने क्रमाद् यवरलाः स्युः। सुध् य् अर्घ्यः, मध् व् अरिः, पित् र् उक्त्या, गम् ल् आह । 'अनचि च' (८-४-४७) इति धकारादीनां द्वित्वम् । सुध् ध् य् अर्घ्यः । मध् ध् व् अरिः । पित् त् र् उक्त्या । गम् म् ल् आह ।

---

धात्वर्थस्य चेद् गौः कर्ता । प्रायश्चित्तम् ।

"प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम् ।"

आकृतिगण इति । अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्य इत्यर्थः ॥

इति सर्वस्वप्रकाशिकायां सुट्सन्धिः ॥

---

इको यणचि । क्रमादिति । यद्यपीको ह्रस्वादिभेदात् षट्षष्टिः यणस्तु सप्तेति संख्यावैषम्यमस्ति. तथापि प्रत्याहारपाठे शब्दतः संख्यासाम्यमस्तीति कैयटः । नन्वेवं सति तृतीयचतुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ (अ? ऌ)वर्णानां रेफादेशस्य च प्रसङ्ग इति चेन्न । स्थानेऽन्तरतमपरिभाषया व्यवस्थासिद्धेः । अन्यैस्तु स्थानेऽन्तरतमपरिभाषैवाश्रिता । तेषां यथासङ्ख्यपरिभाषा नात्रापेक्षणीयेति लाघवमस्ति । तथाप्यत्र लक्षणद्वययोगात् परिभाषाद्वयप्रवृत्तिसम्भव इत्येवमुक्तम् । तथा च हरदत्तः—'इकां यणां च साम्याद् यथासङ्ख्यं भवति आन्तर्यतो व्यवस्थे'ति । धकारादीनां द्वित्वमिति । नात्र 'अचः परस्मिन्नि'ति यकारादीनां स्थानिवद्भावेनाच्परत्वाद् 'अनचि' इति

---

१. 'त्याङ्क' ग. पाठः.

### झलां जश् झशि (८. ४. ५३)

झलां झशि परे जशादेशः स्यात् । इति पूर्वधकारयोर्जश्त्वम् । अन्तरतमत्वाद् दकारः । सुद् ध् य् अर्च्यः । मद् ध् व् अरिः । श्लिष्टोक्तिः — सुद्ध्यर्च्यः । मद्ध्वरिः । पित्त्रुक्त्या । गम्म्लाह । 'यणो मयो द्वे स्त इति वाच्यम्' (वा० ८-४-४७) इत्यस्य मयः परस्य यणो द्वित्वमिति व्याख्याने यकारादीनामपि द्वित्वम् । सुद्ध्य्यर्च्यः । मद्ध्व्वरिः । पित्त्रुक्त्या । गम्म्ल्लाह ।

### त्रिप्रभृतिषु शाकटायनस्य (८. ४. ५०)

### दीर्घादाचार्याणाम् (८. ४. ५२)

### सर्वत्र शाकल्यस्य (८. ४. ५१)

शाकटायनमते वर्क्कं वक्र्त्या इत्यादौ त्र्यादिषु संयुक्तवर्णेषु द्वित्वं न । अन्येषामाचार्याणां[1] मते दीर्घं गात्रमित्यादौ दीर्घात् परस्य वर्णस्य द्वित्वं न । शाकल्यमते तु सर्वत्रापि द्वित्वं नेष्टम्[2] । एषु पूर्वसूत्रयोर्मतज्ञानमात्रं फलम् । अन्त्यमतेन सर्वद्वित्वविकल्पः सिद्धः[3] । सुध्यर्च्यः । मध्वरिः । पित्रुक्त्या । गम्लाह ।

---

द्वित्वनिषेधः शङ्क्यः । 'न पदान्ते'ति सूत्रेण द्विर्वचनविधौ तन्निषेधात् । एतच्च सुब्धातुखण्डान्ते स्वयमेव वक्ष्यति । यकारादीनामिति । अत्र रेफस्य द्वित्वं न । द्वित्वप्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य का(र्य? र्यि)-त्वबाधनादित्याहुः । पित्रुक्त्येत्यादौ स्थानित्वेन निमित्तत्वमिकः 'तस्मादित्युत्तरस्ये'त्यादिज्ञापकान्न बाध्यत इति कैयटः । एवंच पित्रुक्त्येत्यत्र तकारमात्रस्य द्वित्वविकल्पाद् रूपद्वयम् । अन्येषां तु यणोऽपि द्वित्वविकल्पाच्चत्वारि रूपाणि इति ज्ञेयम् । विकल्पः सिद्ध इति । एतच्च 'अनचि चे'त्यत्र वाशब्दानुवृत्तिपक्ष-

---

१. 'तं स' ख. ग. पाठः. २. 'नेष्टं' क. पाठः ३. 'ल्पसिद्धिः सु' ख. ग., 'ल्पसिद्धेः सु' घ. पाठः.

### इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (६. १. १२७)

शाकल्यमतेऽसवर्णेऽचि परे इकः प्रकृतिभावो दीर्घकां ह्रस्वश्च स्यात्। तेन वा सन्ध्यभावः सुधीशब्दस्य ह्रस्वश्च। सुधि अर्च्यः। मधु अरिः। पितृ उक्त्या। गम्लृ आह। 'नित्यसमासेऽयं प्रकृतिभावो नेति वाच्यम्'। सुध्यर्थम्। अभ्यस्तम्। अर्थेन प्रादीनां च नित्यसमासो वक्ष्यते। हरि अर्चा। बहु इष्टा इत्यत्र प्राग्वद् यण्। हर् य् अर्चा। बह् व् इष्टा।

### अचो रहाभ्यां द्वे (८. ४. ४६)

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे स्तः। हर् य् य् अर्चा। बह् व् व् इष्टा। श्लिष्टोक्तिः— हर्य्यर्चा, बह्व्विष्टा। अत्रापि 'सर्वत्र शाकल्यस्य' (८-४-५१) इति द्वित्वाभावः, 'इकोऽसवर्णे—' (६-१-१२७) इति प्रकृतिभावश्चास्ति। हर्यर्चा बह्विष्टा। हरि अर्चा बहु इष्टा। श्रद्धे आ, विष्णो ए, गै अति, स्तौ अकः, इति स्थिते।

### एचोऽयवायावः (६. १. ७८)

अचि परे एचः स्थाने क्रमाद् अय्, अव्, आय्, आव् इत्यादेशाः स्युः। श्रद्धया। विष्णवे। गायति। स्तावकः।

### वान्तो यि प्रत्यये (६. १. ७९)

वान्तौ अव् आव् इत्येतौ यकारादिप्रत्ययेऽपि स्तः। गव्यम्। नाव्यम्। 'अध्वपरिमाणे गोर्यूतावबादेशो वाच्यः'। गव्यूतिः।

---

माश्रित्योक्तम्। अनुवृत्तिपक्षे तु तेनैव सर्वत्र विकल्पः सिद्धः। नित्यसमासे इति। अत्र नित्यग्रहणं भाष्ये प्रत्याख्यातम्। तन्मतेऽत्र प्रकृतिभावो न। समासमात्रे शाकलप्रतिषेधात्॥ वान्तो यि प्रत्यये। वान्तशब्दोऽत्र सन्निहिते वान्ते वर्तत इत्याह— अवाव् इति। तौ च ओदौत्स्थानिकौ, पूर्वसूत्रे यथासङ्ख्यसम्बन्धात्। तत्र यथा यः कश्चन वान्तशब्दो न भवति, तथान्यस्थानिकोऽपि न भविष्यति। विशिष्टस्यैव सन्निधानादित्यभिप्रेत्योदाहरति— गव्यं नाव्यमिति। गोर्विकारो गव्यम्। 'गोपयसोर्यत्'। नावा तार्यं नाव्यम्। 'नौ वयो धर्मे'त्यादिना यत्। गव्यूतिः। 'ऊतियूती'त्यादिना

## धातोस्तन्निमित्तस्यैव (६. १. ८०)

धातोर्यादौ प्रत्यये परे तत्प्रत्ययनिमित्तयोरोदौतोरेव वान्तादेशः स्यात् । लव्यम् । लाव्यम् । तन्निमित्तस्येत्युक्तेः प्रोयत इत्यत्र न । अत्र हि प्र ऊयत इति स्थिते सन्धिकृत ओकारः, न प्रत्ययकृतः ।

## क्षय्यजय्यौ शक्यार्थे (६. १. ८१)

अनयोः शक्यार्थेऽयादेशः । योग्यार्थे तु क्षेयं जेयम् ।

## क्रय्यस्तदर्थे (६. १. ८२)

क्रयार्थं प्रसारितं क्रय्यम् । अन्यत्र क्रेयम् । गृहे इह, साधो एहि, शुद्ध्यै अत्र, पादौ अर्पय, एष्वयाद्यादेशे कृते ।

## व्योर्लघुप्रयत्नतरः शाकटायनस्य (८. ३. १८)

भो भगो अघो अपूर्वस्य यकारस्यावर्णपूर्वयोः पदान्तयोर्वकारयकारयोश्चाशि परे शाकटायनमते लघुप्रयत्नतर आदेशः स्यात् ।

## लोपः शाकल्यस्य (८. ३. १९)

तन्मते त्ववर्णपूर्वयोः पदान्तयोर्व्योरशि लोपः स्यात् । तेन त्रिधा । अयादेरविकारपक्षे— गृहयिह, साधवेहि, शुद्ध्यायत्र, पादावर्पय । लघुप्रयत्नतरपक्षे — एते यकारवकाराः शैथिल्येनोच्चार्याः । लोपपक्षे तु — गृह इह, साध एहि, शुद्ध्या अत्र, पादा अर्पय । एषु पुनः सन्धिप्राप्तौ ।

## पूर्वत्रासिद्धम् (८. २. १)

अन्त्यत्रिपादीगतो विधिस्ततः प्राक्तनेषु कर्तव्येष्वसिद्धः स्यात् ।

---

यूतिशब्दो निपातितः । अत्र 'हलि सर्वेषाम्' इति वा 'लोपः शाकल्यस्ये'ति वा वकारलोपः प्राप्तः । वान्त इत्यत्र वकारात् पूर्वभागे 'लोपो व्योरि'ति लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्तादेशः स्यात् । वकारो न लुप्यत इत्यर्थ इति व्याख्यानान्न स्यात् ।। **क्रय्यस्तदर्थे** । तस्मै प्रकृत्यर्थायेदं तदर्थमित्याह — (क्रि ? क्र)यार्थमिति ।। **व्योर्लघुप्रयत्नतरः शाकटायनस्य** । शैथिल्येनेति । शैथिल्यं च जिह्वाग्रोपाग्रमध्यमूलानामित्याहुः ।। **पूर्वत्रासिद्धम्** । अत्र विधिपक्षे त्रिपादी सपादसप्ताध्यायीं प्रत्यसिद्धा स्यात् ।

त्रिपाद्यामपि परः परो विधिः पूर्वपूर्वविधिं प्रत्यसिद्धः स्यात् । इति यवलोपविधेस्त्रिपादीगतत्वेनासिद्धत्वान्न सन्धिः ।

एकः पूर्वपरयोः (६. १. ८४)

इतः परं पूर्वपरयोः सहैक आदेश उच्यते ।

आद् गुणः (६. १. ८७)

अवर्णादचि परे पूर्वपरयोः सह एकोऽन्तरतमो गुणः स्यात् । उपेन्द्रः । रमेशः । क्रीडोत्सुकः । अवशिष्टयोः ऋऌवर्णयोरवशिष्टोऽकारो गुणः ।

---

त्रिपाद्यां तु पूर्वं पूर्वं प्रति परं परमसिद्धं न स्यात् । अतोऽधिकारपक्षमाश्रित्याह— त्रिपाद्यामपीत्यादि । विधिर्विधानम् । शास्त्रमित्यर्थः । शास्त्रासिद्धिपक्षस्यैव भाष्ये सिद्धान्तितत्वात् ॥ एकः पूर्वपरयोः । अधिकारोऽयं 'ख्यत्यात् परस्ये'त्यतः प्राक् । 'उरण् रपर' इति सूत्रे चत्वारः पक्षाः । षष्ठीनिर्दिष्टस्य ऋवर्णस्य स्थाने रपरोऽण् स्यादिति रपरत्वविशिष्टाण् विधीयते इति प्रथमः । अणामनणां च प्रसङ्गे अणेवेति नियमः, तस्य च रपरत्वं विधीयत इति द्वितीयः । उः स्थाने विहितो योऽणित्यनूद्य तस्य विधानोत्तरकालं रपरत्वमात्रं विधीयत इति तृतीयः । चतुर्थे पक्षे तु पूर्वसूत्रादिहापि स्थानशब्दद्वयं द्रष्टव्यम् । तत्रैक उरित्यनेन संबध्यते । अपरो रपर इत्यनेन । तथाच ऋवर्णस्य स्थाने योऽण् स प्रसङ्गावस्थायामेव रपरः स्यादिति सूत्रार्थः । स्थानशब्दः प्रसङ्गवाची इति । तत्र प्रथमे पक्षे कृतिरित्यत्र 'ञ्नित्यादिर्नित्यमि'त्युदात्तविधौ ऋकारस्य स्थाने रपरोऽण् स्यात् । कर्ता कारक इत्यादौ गुणवृद्धी बाधित्वाण् भवन् अकार एवेति नियमाभावादिकारोकारावपि रपरौ स्याताम् । द्वितीये तु गुणवृद्धिसंज्ञकेषु ऋवर्णस्यान्तरतमाभावात् सर्वेषु प्राप्तेषु अणेवेति नियमादकाराकारावेव गुणवृद्धी रपरौ स्त इति सिद्धम् । उदात्तविधौ दोषोऽस्मिन् पक्षेऽपि तदवस्थ एवेत्याद्यौ पक्षौ दुष्टावेव । अन्त्यपक्षद्वयेऽपि मूलग्रन्थो योजयितुं शक्यते । तयोः प्रथमे पक्षे अवशिष्टयोरित्यादेरयमर्थः । अवशिष्टयोः सद(शता ? शा)देशरहितयोर्ऋऌवर्णयोः । अवशिष्टः स्वयो(न्य ? ग्य)स्थानिरहितः । अकारो गुण इति । कथं पुनः स एवेति चेन्न । नष्टाश्वदग्धरथन्यायेन । तथाहि — कयोश्चिद् रथिनोर्गच्छतोर्मध्येमार्गम् एकस्याश्वो नष्टः । अन्यस्य रथो दग्धः । तावुभौ यथा मिलतः, एवमिहापि आदेशरहितः

## उरण् रपरः (१. १. ५१)

ऋवर्णस्यादेशोऽण् रप्रत्याहारपरः स्यात् । ऋवर्णेन सावर्ण्याद् लृवर्णस्यापि ग्रहः । तेन तयोः अर् अल् इति गुणः । कृष्णर्द्धिः । 'अचो रहाभ्यां द्वे' (८-४-४६) इति धस्य द्वित्वम् । तवल्कारः । अत्र 'यणः परस्य मयो द्वे स्त' (वा० ६-१-४४) इति द्वित्वम् ।

## वृद्धिरेचि (६. १. ८८)

अवर्णादेचि परे पूर्वपरयोः सहैका वृद्धिः स्यात् । त्वजैतम् । अद्यौघम् । कृष्णैकत्वम् । ममौत्कण्ठ्यम् । इह तात् परस्यापि तपरत्वेन 'वृद्धिरादैच्' (१-१-१) इत्यत्र द्विमात्रस्यैवैचो वृद्धित्वोक्तेस्त्वजैतमित्यादावजूद्वयरूपस्य स्थानिनस्त्र्यादिमात्रत्वेऽपि द्विमात्रैव वृद्धिः । एवं रमेशादौ गुणोऽपि । 'अक्षादूहिन्यां वृद्धिर्वाच्या' (वा० ६-१-८९) अक्षौहिणी । स्वादीरेर्वृद्धिर्भाष्योक्ता । स्वतन्त्रगतिः स्वैरम् । 'ऋते च तृतीयासमासे' (वा० ६-१-८९) इत्यवर्णाद् वृद्धिः रपर आकारः । सुखेन

---

स्थानी, स्थानिरहित आदेशश्चेति भावः । ऋवर्णस्य आदेशः ऋवर्णस्य स्थाने भूत इत्यर्थः । रप्रत्याहारपरः स्यात् । आदेशानन्तरमित्यर्थः । अर् अल् इति गुण इति । सम्पन्न इति शेषः । अन्तिमपक्षे त्वित्थं व्याख्या — अवशिष्टयोः अनुदाहृतयोः अवशिष्टः अनुदाहृतः अकारो गुण इति । स्यादिति शेषः । कथं पुनरनन्तरतमोऽपि स्यादित्याह — उरण् रपर इति । ऋवर्णस्यादेशः । आदिश्यत इत्यादेशः । विधीय(मान) इत्यर्थः । रप्रत्याहारपरः स्यादिति । प्रसङ्गावस्थायामेवेति ज्ञेयम् । एवंच गुणवृद्ध्योः प्राप्त्यवस्थायामेवावर्णो रपरः सम्पन्न इति प्रमाणतोऽन्तरतमावेङौ बाधित्वा 'स्थानेऽन्तरतम' इति स एव भविष्यतीत्याह — तयोरर् अलिति गुण इति । स्यादिति शेषः ॥ वृद्धिरेचि । गुणापवादः । अक्षौहिणीति । ऊहोऽस्त्यस्या ऊहिनी । अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् । स्वादीरेरिति । ईर गतौ । भावे घञित्याह — गतिरिति । अत्र केचिद् ईरेरिणोरिति पठन्ति । 'पदास्वैरी'ति निपातनात् सिद्धमिति हरदत्तोक्तेः स पाठ उपेक्षितः । ऋते च तृती-

---

१. 'र्द्धिः । तव' ग. घ. ङ. च. छ. पाठः.

ऋतः सुखार्तः । ऋतो गतः । 'प्रवत्सतरकम्बलवसनानामृणे'। (वा० ६-१-८९) प्रवृद्धं प्रगतं वा ऋणं प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । वसनार्णम् । तद्रूपमृणमित्यर्थः । प्रवृद्धमृणमस्येति प्रार्ण इत्याद्यपि स्यात् । 'ऋणदशाभ्यां च' (वा० ६-१-८९) ऋणापाकरणार्थमृणम्[1] ऋणार्णं, तद्वान् वा । दशार्ण इति देशनाम।

### उपसर्गादृति धातौ (६-१-९१)

अवर्णान्तादुपसर्गाद् ऋकारादौ धातौ परे वृद्धिः स्यात् । उपार्च्छति ।

### वा सुप्यापिशलेः (६. १. ९२)

आदुपसर्गादृदादौ सुब्धातौ वा वृद्धिः स्यात् । आपिशलिग्रहः पूजार्थः । उपर्षभीयति उपार्षभीयति । लृतोऽपि सवर्णग्रहाद्, उपल्कारीयति उपाल्कारीयति ।

### एङि पररूपम् (६. १. ९४)

आदुपसर्गादेङादौ धातौ परे पूर्वपरयोः सह पररूपं स्यात् । उप एजति उपेजति । उपोषति । 'एङादौ सुब्धातौ वा वाच्यम्' । उपोदनीयति उपौदनीयति ।

---

यासमासे । तृतीयेति किम् । परमर्तः । दशार्णो देश इति । ऋणशब्दोऽत्र दुर्गपर्यायः । नदी च दशार्णा । अत्र तु जलपर्याय ऋणशब्द इत्याहुः ॥ उपसर्गादृति धातौ । उपसर्गादित्येव धातुग्रहणे सिद्धे धातुग्रहणं योगविभागेन पुनर्विधानार्थम् । तेन 'ऋत्यक' इति वा 'इकोऽसवर्ण—' इति वा प्रकृतिभावोऽत्र नेत्याहुः ॥ वा सुप्यापिशलेः । ऋतीति तपरकरणाद् दीर्घे न । उप ॠकारीयति उपर्कारीयति ॥ एङि पररूपम् । वृद्ध्यपवादः । उपेजतीति । 'एजृ कम्पने' । दीप्त्यर्थस्त्वात्मनेपदी । उपोषति । 'उष दाहे' । वा वाच्यमिति । वाच्यं व्याख्येयमित्यर्थः । व्याख्या च 'वा सुपी'त्यनुवर्त्य आदु-

---

१. 'र्थमुपात्तमृ' ख. ङ. च. छ. पाठः.

## एत्येधत्यूठ्सु (६. १. ८९)

एषु परेष्वाद् वृद्धिरेव । उपैति । उपैधते । णिजन्तत्वे शब्दान्तरत्वाद् उपेधयतीत्यत्र न वृद्धिरिति माधवः । एतेरेजादित्व एव वृद्धिः । उप इहि उपेहीत्यत्र न । उपेष्यतीत्यादाववृद्धिश्चेदयतेः साध्यम् । ऊठि वृद्धिं पश्चाद् वक्ष्यामः । 'प्रादूहोढोढ्येषैष्येषु' (वा० ६-१-८९) वृद्धिरेव । प्रकृष्ट ऊहः प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । एषैष्ययोरेङि पररूपे प्राप्ते उक्तिः । ईषिधातुजादीष्यशब्दादाद्गुणे प्रेष्यसिद्धिः । 'शकन्ध्वादिषु पररूपं वाच्यम्' (वा० ६-१-९४) शकानामन्धुः शकन्धुः । कुलान्यटतीति कुलटा । सारङ्गः । सीमन्तः । पतञ्जलिः । लाङ्गलं हलं तस्येषा दण्डो लाङ्गलीषा हलीषा । 'एवे

---

पसर्गादेङादौ सुब्धातौ पररूपं वा स्यादिति वाक्यभेदेन ॥ एत्येधत्यूठ्सु । वृद्धिरेवेति । (ङत्वे ? ए)ङि पररूपमूठि गुणश्च नेत्यभिप्रायः । माधव इति । वृत्तिश्च 'वृद्धिरेची'त्यत एचीत्यनुवृत्तमेतेरेव विशेषणम्, न त्वेधतेः । अव्यभिचारात् । नाप्यूठः । असम्भवादित्याह । अत्र कैयटः — 'एधतेरपि विशेषणम् । मा भवान् प्रेदिधदित्यत्र व्यभिचारसम्भवाद्' इति । तस्य चायमभिप्रायः — ण्यन्तस्य शब्दान्तरत्वेऽपि प्रकृतेरेध इत्येतद्रूपानपायात् स्यादेवात्र वृद्धिरिति । अयतेरिति । 'ई गतावि'त्यस्मादित्यर्थः । प्रौढ इति । 'अर्थवद्ग्रहणे नानर्थकस्ये'ति ऊढग्रहणेन क्तान्तमेव गृह्यते । नतु क्तवत्वन्तस्यैकदेशः । प्रोढवान् । प्रैष इति । गत्याभीक्ष्ण्यार्थयोरिष्यतीष्णात्योः 'इष इच्छायाम्' इति तौदादिकस्य च घञि ण्यति च एष एष्य इति रूपे । (नतु) 'ईष उञ्छे' । 'ईष गतिहिंसादर्शनेषु' आभ्यामित्यर्थः । आभ्यामेव घञि प्रेषसिद्धिश्चेति ज्ञेयम् । दीर्घोपधत्वाच्च गुणाभावः । शकन्ध्वादिष्विति । शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अतष्टेरेव । अन्धुः कूपः । कुलटा । 'कुलटाया वे'ति निर्देशात् कर्मण्य(णं) बाधित्वा पचाद्यच् । सारङ्गः पशुपक्षिणोः । सीमन्तः केशवेशे । अन्यत्र साराङ्गः सीमान्तः । पतन्त्यञ्जलिर्यस्मिन्नमस्कार्यत्वादिति पतञ्जलिः । ईषेति । 'ईष उञ्छे' । 'ईष गत्यादिषु' । आभ्यां

चानियोगे' (वा० ६-१-९४) नियोगोऽवधारणं ततोऽन्यत्रार्थे पररूपं स्यादिति माधवः । क्वेव भोक्ष्यसे, न क्वापीत्यर्थः । एवशब्दोऽत्रासम्भावने । अवधारणे तु वृद्धिरेव । अद्यैवागतः । 'ओत्वोष्ठयोः समासे वा पररूपम्' (वा० ६. १. ९४) । स्थूलोतुः स्थूलौतुः । बिम्बोष्ठः बिम्बौष्ठः । असमासे तु तवौष्ठः ।

## ओमाङोश्च (६. १. ९५)

अवर्णादनयोः पररूपं स्यात् । राजोमित्यवदत् । आङि तु आ इहि एहि इति सिद्धे पुनः सन्धौ पररूपम् । कृष्ण एहि कृष्णेहि । पच अन्ति

## अतो गुणे (६. १. ९७)

अपदान्तादकाराद् गुणाख्ये वर्णे परे पररूपं स्यात् । पचन्ति ।

## अव्यक्तानुकरणस्यात इतौ (६. १. ९८)

अव्यक्तनादानां यद् वर्णैरनुकरणं तद्गतस्य अत इत्यस्य इतौ परे सह पररूपं स्यात् । पटत् इति पटिति । झटिति । 'घटदिति गम्भीरमम्बुदैर्नदितमि'त्यत्र दकारो ज्ञेयः । 'एकाचो नेष्यते' । श्रदिति करोति ।

## नाम्रेडितस्यान्त्यस्य तु वा (६. १. ९९)

द्विरुक्तस्याव्यक्तानुकरणस्येतौ परेऽतः पररूपं न स्यात् । अन्त्यस्य तकारस्य तु वा स्यात् । पटत्पटदिति । तकारस्य पररूपे त्वाद्गुणः । पटत्पटेति । पटत्पटितीति प्रयोगश्चेत् समुदायस्यैवानुकरणं नतु पटच्छब्दद्विरुक्तिरिति ज्ञेयम् ।

---

'गुरोश्च हल' इत्यप्रत्ययः । शकन्ध्वादिराकृतिगणः । तेन मनीषाकर्कन्ध्वादयोऽपि द्रष्टव्याः ॥ अव्यक्तानुकरणस्यात इतौ । अव्यक्तनादानां यद् वर्णैरनुकरणमिति । अव्यक्तनादानां च वर्णैरनुकरणं येनकेनचित् सादृश्येन भवति ॥ नाम्रेडितस्यान्त्यस्य तु वा । पटत्पटदिति । 'डाचि बहुलं द्वे

## अकः सवर्णे दीर्घः (६. १. १०१)

अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः । होतृ लृकार इत्यत्र लृवर्णस्य दीर्घाभावाद् ऋकारः । होतॄकारः । अत्र ऋलृवर्णयोः परयोः सार्धद्विमात्र ऋ लृ च वा वाच्यः । दातृषभः होतॣकारः । गङ्गाहृद इत्यादावाकारहकारयोर्दीर्घाभावार्थमचीत्युक्तम् । प्रत्याहारपठितानामेवाचां 'नाज्झलौ' (१.१.१०)इति सावर्ण्यं निषिद्धमिति दीर्घहलोः सावर्ण्यसम्भवात् प्रसज्येतैव दीर्घ इति । हरे अव विष्णो अव ।

## एङः पदान्तादति (६. १. १०९)

पदान्तादेङोऽति परे पूर्वरूपं स्यात् । हरेऽव । विष्णोऽव ।

## सर्वत्र विभाषा गोः (६. १. १२२)

लोके वेदे च गोरति परे वा प्रकृतिभावः स्यात् । गो अग्रं गोऽग्रम् ।

## अवङ् स्फोटायनस्य (६. १. १२३)

तन्मतेऽचि परे गोरवङादेशः स्यात् ।

---

भवत' इति बहुलवचनाद् द्वित्वम् ॥ अकः सवर्णे दीर्घः । प्रत्याहारपठितानामेवाचां नाज्झलाविति सावर्ण्यं निषिद्धमिति । पूर्वं वर्णानामुपदेशः । उपदेशोत्तरकाल इत्संज्ञा । इत्संज्ञोत्तरकालमादिरन्त्येनेति प्रत्याहारग्रहणम् । तदुत्तरकालौ सवर्णसंज्ञाविधिनिषेधौ । तत अणुदित्सवर्णस्येति ग्रहणकशास्त्रस्य प्रवृत्तिः । एवं स्थिते सावर्ण्यविधिनिषेधाभ्यां प्राग् ग्रहणकशास्त्रस्याप्रवृत्तिरेवेत्यभिप्रायः ॥ सर्वत्र विभाषा गोः । इह एङित्यनुवर्त्य एङन्तस्य गोरिति व्याख्येयम् । तेनेह न । चित्रग्वग्रमिति । प्रतिपदोक्तस्य चैङो ग्रहणान्नेह चित्रगोऽग्रम् । प्रकृतिभाव इति । 'प्रकृत्यान्तः पादमि'ति सूत्रात् प्रकृत्येत्यनुवृत्तेः ॥ अवङ्

## ङिच्च (१. १. ५३)

ङिदादेशोऽनेकालप्यन्त्यस्य स्यात्। इत्योकारस्यावङ्। ङलोपः। आद् गुणः(६. १. ८७)। गवेशः। गवीशः। अति परेऽप्यच्त्वादवङ् वा स्यादेव। गवार्थम्। गो अर्थम्।

## इन्द्रे च नित्यम् (६. १. १२४)

इन्द्रे परे गोर्नित्यमवङ् स्यात्। गवेन्द्रः॥

इत्यच्सन्धिः॥

## वाक्यस्य टेः प्लुत उदात्तः (८. २. ८२)

इतः परं वाक्यान्त्यटेः उदात्तः प्लुतो विधीयते।

## दूराद्धूते च (८. २. ८४)

दूरात् सम्बोधनार्थस्य वाक्यस्य टेः प्लुतः स्यात्। एहि कृष्ण३ इदं पयः। अत्राद्गुणे प्राप्ते।

## प्लुतप्रगृह्या अ[1]चि नित्यम् (६. १. १२५)

प्लुताश्च प्रगृह्याश्चाचि परे प्रकृत्या स्युः। इति न सन्धिः। एहि कृष्ण३ इदं पयः। सर्व एव प्लुतो वा वाच्य इति प्लुताभावे सन्धिरपि। एहि कृष्णेदं पयः।

स्फोटायनस्य। अत्राप्येङन्तस्य गोरिति व्याख्येयम्। पदान्तादित्यनुवृत्ते-र्गवीत्यत्रावङ् न। व्यवस्थितविभाषया गवाक्ष इत्यत्रावङेव॥

इत्यच्सन्धिः॥

वाक्यस्य टेः प्लुत उदात्तः। इतः परमिति। आ पादपरिसमाप्ते-रिति शेषः॥ दूराद्धूते च। हूतमाह्वानम्। तच्च सम्बोधनमात्रलक्षणमि-त्यभिप्रेत्याह — दूरात् संबोधनार्थस्येति। एवञ्च सक्तून् पिब देवदत्त३ इत्यादावाह्वानाभावेऽपि स्यादेव प्लुतः॥ प्लुतप्रगृह्या अचि नित्यम्। नित्यमिति किम्। हरी इमावित्यादावयमेव प्रकृतिभावो यथा स्यात्। 'इको-

१. 'चिं प्लु' क. ख. ङ. च. छ. पाठः.

हूतिवाक्यं प्रधानत्वान्नाम्न एव प्लुतो मतः।
वाक्यान्त्ये नाम्न्यनेन स्यात् प्लुतोऽनन्त्ये तु कथ्यते॥

वृष्णिवीर इह।

गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् (८. २. ८६)

प्राचां मते ऋकारवर्जितस्य गुरोर्वानन्त्यस्य वा टेर्वा एकैकस्य प्लुतः स्यात्, न तु वाक्यटेरेव। प्रत्याभिवाददूराद्धूतप्लुतयोरयं स्थानविकल्पः। तेनात्रानन्त्यटेः प्लुतः। प्राग्वत् प्रकृतिभावः। वृष्णिवीर ३ इह। अनृतो गुरोः प्लुते तु वृष्णिवी३रेह। गुरोरित्युक्त्या ष्णि इत्यस्य न। अनृत इत्युक्त्या वृ इत्यस्य न। लक्ष्म्याः सम्बुद्धौ प्लुते कृते लक्ष्मि ३ एहि।

ई चाक्रवर्मणस्य (६. १. १३०)

तन्मते ई इति प्लुतोऽप्लुतवत् स्यात्। प्लुतकृतप्रकृतिभावं न प्राप्नोतीत्यर्थः। तेन वा सन्धिः। लक्ष्म्येहि। लक्ष्मि ३ एहि।

हैहेप्रयोगे हैहयोः (८. २. ८५)

दूराद्धूते हैहेशब्दयोः प्रयोगे तयोरेव प्लुतः स्यात्।

प्लुतावैच इदुतौ (८. २. १०६)

एचामर्धमवर्णाभमूर्ध्वार्धमिउवर्णवत्।
तत्रत्वैचोः प्लुतप्राप्ताविदुदंशस्य वर्धनम्॥

इति हैशब्दे इकारभागस्य द्विमात्रत्वेन त्रिमात्रत्वम्। भाष्ये त्विकारभा-

---

ऽसवर्णे—' इति ह्रस्वसमुच्चितो(मा) भूत्॥ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्। अत्रा(न)न्त्यशब्देन वाक्या(न)न्त्यं गृह्यते। टिश्चाभिसंबध्यते। अपिशब्दोऽन्त्यसमुच्चयार्थ इत्यभिप्रेत्याह—अनन्त्यस्य वा टेर्वेति। अ(न?)न्त्यस्येत्यस्य विवरणं वा टेरिति। एकैकस्य। पर्यायेणेत्यर्थः। अन्यैस्तु अनन्त्यस्यापीत्यनेन गुरुर्विशेषितः। तन्मते नाम्नो वाक्यानन्त्यत्वेऽनेनापि प्लुतो न॥ हैहेप्रयोगे हैहयोः। पुनर्हैहेग्रहणमनन्त्यत्वेऽपि प्लुतप्राप्त्यर्थमित्यभिप्रेत्योदाहरति—

---

१. 'क्ष्मी' ख. पाठः.

गस्य चतुर्मात्रः प्लुत इष्टः। एवं प्लुते कृते प्रकृतिभावः। है ३ अच्युत। हे ३ अच्युत। द्वौ तुल्यार्थौ।

विभाषा पृष्टप्रतिवचने हेः (८. २. ९३)

पृष्टाख्यानद्योतकस्य हिशब्दस्य वा प्लुतः स्यात्। किमस्त्यद्भुतम्। अस्ति हि ३ इदं शृणु। प्लुताभावे सन्धिः। अस्ति हीदं शृणु।

निगृह्यानुयोगे च (८. २. ९४)

युक्तिं निरस्य सामर्षं प्रश्ने वा वाक्यटेः प्लुतः।
वेदः कृतक इत्यात्थ ३ अत्र युक्तिर्हता तव॥

अङ्गयुक्तं तिङाकाङ्क्षम् (८. २. ९६)

अङ्गशब्दयुक्तं वाक्यान्तराकाङ्क्षं तिङन्तं भर्त्सने प्लवते। अङ्ग प्रलपं ३ इदानीं ज्ञास्यसि।

पूर्वं तु भाषायाम् (८. २. ९८)

लोके विचार्यमाणानां पूर्वभागः प्लवते। रज्जुर्नु ३ अहिर्नु।

प्रतिश्रवणे च (८. २. ९९)

प्रार्थितस्यानुवादश्च स्वस्याभ्युपगमस्तथा।
श्रवणाभिमुखत्वं च प्रतिश्रवणमिष्यते॥

एष्वर्थेषु वाक्यटेः प्लुतः स्यात्।

इष्टं ददामि ३ इत्याह नित्य आत्मा ३ इति ब्रुवे।
सखे किमात्थ ३ इत्याह श्रवणाभिमुखोऽपरः॥

चिदिति चोपमार्थे प्रयुज्यमाने (८. २. १०१)

उपमार्थे चिच्छब्दे प्रयुक्ते वाक्यटेरनुदात्तः प्लुतः स्यात्। पिताचिद्रक्षा ३ इत्याह। पितेव रक्षेत्यर्थः।

वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु।
[(८.१.८)

---

हैअच्युतेत्यादि॥ निगृह्यानुयोगे च। स्वमतात् प्रच्यावनं निग्रहः। अनुयोगः प्रश्न इत्याह—युक्तिं निरस्येति। हता खण्डिता॥ वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु। परगुणानामसहनमसूया।

---

१. 'किं नि', २. 'त्था ३' ग. पाठः. ३. 'पा' ख. पाठः.

असूयाद्यर्थवाक्यादेः सम्बोधनस्य द्वे रूपे स्तः ।

**तस्य परमाम्रेडितम् (८.१.२)**

इह द्विरुक्तस्य परखण्ड आम्रेडिताख्यः ।

**स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु (८. २. १०३)**

एष्वर्थेष्वाम्रेडिते परे पूर्वस्य टेः स्वरितः प्लुतः स्यात् । असूयायाम् उज्ज्वल ३ उज्ज्वल! का तव शोभा। सम्मानने[1]— अधीश ३ अधीश धन्योऽसि । कोपे — उद्धत ३ उद्धत हन्मि त्वाम् । कुत्सने— अज्ञ ३ अज्ञ क्षुद्रोऽसि ।

**आम्रेडितं भर्त्सने (८.२.९५)**

वधाद्युक्त्या भयोत्पादनं भर्त्सनम् । तत्राम्रेडितमेव प्लवते । अहिताहित ३ अर्दये त्वाम् । 'भर्त्सने पर्यायेण प्लुतो वाच्यः' (वा० ८-२-९५)। तेन पूर्वस्य च स्यात् । अहित ३ अहित अर्दये त्वाम् । प्लुतस्य वावचनात् प्लुतं विनाप्येषु द्वित्वमस्ति ।

**क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् (८.२.१०४)**

एष्वर्थेषु वाक्यान्तराकाङ्क्षस्य तिङन्तस्य स्वरितः प्लुतः स्यात् । आचारत्यागः क्षिया । स्वयं तिष्ठति ३ उपाध्यायं चारयति। क्रियाद्वयेनैव क्षियाप्रतीतेः साकाङ्क्षत्वम् । आशिषि—प्रजां लभस्व ३ अर्थं च । प्रैषे —श्राणां कुरु ३ ओदनं च ।

**अनन्त्यस्यापि प्रश्नाख्यानयोः (८. २. १०५)**

अनयोः सर्वस्य पदस्य टेः स्वरितः प्लुतः स्यात् । प्रश्ने— कदा ३ इह ३ आगमः ३ । आख्याने — अद्य ३ एव ३ आगमः ३ इति ।

**ईदूदेद्द्विवचनं प्रगृह्यम्(१.१.११)**

---

सम्मतिः पूजा । कोपः क्रोधः । कुत्सनं निन्दनम् ॥ **तस्य परमाम्रेडितम्।** इहेति । अष्टमाध्याय इत्यर्थः ॥ **इदूदेद्द्विवचनं प्रगृह्यम्** । ईदूदेदन्तं द्विव-

---

1. 'म्माने' क. ख. घ. ङ. च. पाठः.

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञम् । 'प्लुतप्रगृह्या —'(६-१-१२५) इति प्रकृतिभावः । हरी इमौ । दयालू उभौ । रमेते इह ।

## अदसो मात् (१. १. १२)

अदःशब्दस्य मात् परावीदूतौ प्रगृह्याख्यौ । अमी अच्युताः । अमू अङ्गने ।

## निपात एकाजनाङ् (१. १. १४)

केवलाज्रूप आङ्वर्जितो निपातः प्रगृह्याख्यः । अ अपेहि । ऐ आगच्छ । क्षेपानुनयावर्थौ । अनाङित्युक्तेराङः सन्धिरस्ति । आ शब्दस्य तु प्रगृह्यत्वादसन्धिरेव ।

"ईषदर्थक्रियायोगमर्यादाभिविधिष्विह ।
आकारो ङिदिति प्राहुर्वाक्यस्मरणयोरङित् ॥"
ईषदर्थे भवेदोष्णमाश्नातीति क्रियायुतौ ।
मर्यादायामार्णवात् भूः परस्मिन्नाच्युतात् सुराः ॥"

पूर्वोक्तवाक्यान्यथात्वसूचना वाक्यमुच्यते
आ एवं वदसीदानीं प्राङ् नैवमिति सूच्यते ॥

---

चनान्तमिति व्याख्याने कुमार्योरगारं कुमार्यगारमित्यादौ प्रत्ययलक्षणेन द्विवचनान्तत्वात् प्रगृह्याश्रयप्रकृतिभावप्रसङ्गः स्यात् । अत आह — **द्विवचनमिति** । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति चोक्तम् । ईदादीनां सवर्णाग्राहकत्वेऽपि अमी इतीत्यादौ प्लुतस्यासिद्धत्वादेव प्रगृह्याश्रयः प्रकृतिभावः स्यात् । प्लुताश्रयस्त्वप्लुतवदुपस्थित इति प्रतिषिद्धः ॥ **अदसो मात्**। इह एकारो नानुवर्तते । असम्भवादित्यभिप्रेत्याह — **ईदूताविति** । 'अदसो माद्' इति सूत्रं प्रति मूत्वमीत्वे नासिद्धे । आरम्भसामर्थ्यात् । अमी अच्युताः इत्यत्र बहुवचनत्वात् पूर्वेणाप्राप्तिः । **अमू अङ्गने** । अत्र यद्यपि मूभावस्यासिद्धत्वेऽपि(ए)दन्तद्विवचनत्वात् पूर्वेणैव सिद्ध्यति, तथापि पुंलिङ्गे रामकृष्णावमू आसाते इत्यत्र औकारान्तत्वान्न सिद्ध्यति । अत ऊकारानुवृत्तिस्तदर्थेत्याहुः ॥ **निपात एकाजनाङ्** । एकः अच् एकाजिति कर्मधारयः । व्याहरति मृग इत्यादिनिर्देशादित्याह — **केवलाज्रूप इति** । केवलः सजा-

प्रसादे तु द्विधा प्रोक्तं वाक्यालङ्कार एव वा ।
वाक्यं स्यात् पूर्ववाक्यार्थपरामर्शनमेव वा ॥
वाक्यालङ्कारमात्रेऽर्थे शश्वदा अच्युतं भजे ।
पूर्वोक्तस्य परामर्शे त्वेतदा उपपद्यते ॥
अर्थस्य स्मर्यमाणत्वसूचनं स्मरणं भवेत् ।
आ इदं गुरुणोक्तं प्रागिति ब्रूते स्मरन्नसौ ॥"

**ओत् (१. १. १५)**

**ओदन्तो निपातः प्रगृह्याख्यः । अहो अच्युतः ।**

**ऋत्यकः (६. १. १२८)**

**अकः ऋति परे प्रकृतिभावो ह्रस्वश्च स्यात् । रमऋद्धिः । रमर्धिः । हरि ऋद्धिः । हर्यृद्धिः । दातृ ऋषभः । दातृषभः । हैहयोः प्रगृह्यत्वमिति केचिदिति कौमुदी । हे अच्युत । हे अच्युत । अप्रगृह्यत्व आयादेशः पूर्वरूपं च । हायच्युत । हेच्युत ।**

**इति प्रकृतिसन्धिः ॥**

**महत् + चक्रम्, दैत्यान् + जेतुम्, इति स्थिते । 'स्तोः श्चुना श्चुः' (८. ४. ४०) इति श्चुत्वम् । महच्चक्रम् । दैत्याञ्जेतुम् । बृहत् टङ्कम्, वहन् ढौकते ।**

---

तीयविजातीयरहितः अच् केवलाच् । तद्रूप इत्यर्थः । तेनव्याघ्र इत्यादौ अ इ उ इत्यादिनिपातसमुदाये च न । अत्र हि समुदायस्य संज्ञाप्रवृत्ताववयवानां न स्यात् ॥ **ऋत्यकः** । सवर्णार्थमनिगर्थं चैतदित्यभिप्रेत्योदाहरति— **रम ऋद्धिः । दातृ ऋषभ इति** । अन्यत्र 'त्विकोऽसवर्ण' इत्येव सिध्यतीति भावः ॥

**इति प्रकृतिसन्धिः ।**

**स्तोः श्चुना श्चुः** । स्तोरिति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । अत्र स्थान्यादेशयोरेव यथासङ्ख्यम् । निमित्तकार्यिणोस्तु न । शादिति ज्ञापकादित्यभिप्रेत्योदाहरति — **दैत्याञ्जेतुमिति** । अल्पाच्तरमित्यादौ श्चुत्वाभाव आर्षः ॥

### ष्टुना ष्टुः (८. ४. ४१)

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः। बृहड्ढक्कम्। वहण्ढौकते।

### न पदान्ताट्टोरनाम् (८. ४. ४२)

पदान्ताट्टवर्गात् परस्य नांवर्जितस्य स्तोः ष्टुत्वं न स्यात्। द्विट्तापः। नामिति षष्ठीबहुवचनम्। तत्र ष्टुत्वं स्यात्। षण्णाम्। 'अनाम्नवतिनगरीणामिति वाच्यम्' (वा० ८-४-४२)। षण्णाम्। षण्णवतिः। द्विण्णगरी।

### तोः षि (८. ४. ४३)

तवर्गस्य षे परे ष्टुत्वं न। द्विषत् षण्डे। द्रवन् षण्डः।

### शात् (८. ४. ४४)

शात् परस्य स्तोश्चुत्वं न। अश्नाति। वाक् ईड्यः। चित् रूपः।

### झलां जशोऽन्ते (८. २. ३९)

पदान्तगतानां झलां जशः स्युः। वागीड्यः। चिद्रूपः। तत् सुखम्। जश्त्वे कृते तद् सुखम्।

### यरोऽनुनासिकेऽनुनासिको वा (८. ४. ४५)

पदान्तस्य यरोऽनुनासिके परेऽनुनासिको वा स्यात्। दस्य नः। तन्मुखम्। तद्मुखम्। स्पर्शानामेवेष्टम्, अन्यस्य न। चतुर्मुखः। 'तद्धितप्रत्यये परे नित्यं वाच्यम्' (वा० ८-४-४५)। चिन्मयः। तत् सुखम्। अत्र तस्य जश्त्वे कृते।

---

**ष्टुना ष्टुः।** अत्रापि कार्यिनिमित्तयोर्यथासङ्ख्यं न। तोः षीति ज्ञापकात्॥ **न पदान्ताट्टोरनाम्।** अनामिति लुप्तषष्ठीकमित्याह—**नांवर्जितस्येति**। पदान्तादिति किम्। ईट्टे। टोरिति किम्। सर्पिष्टमम्॥ **यरोऽनुनासिकेऽनुनासिको वा। स्पर्शानामेवेष्टमिति।** स्थानप्रयत्नाभ्यामन्तरतमेषु तेषु

## खरि च (८. ४. ५५)

खरि परे झलां चरः स्युः । इति तकार एव । 'चयो द्वितीयाः शरि पौष्करसादेरि'ति वाच्यम् । (वा० ८-४-४८) । इति तस्य वा थत्वम् । तथ्सुखम् । तत्सुखम् । क्षीरमित्यादौ चैवं वा खत्वाद्यूह्यम् ।

## तोर्लि (८. ४. ६०)

तवर्गस्य ले परे परसवर्णः स्यात् । मुरजिल्लयः । महाल्लाँभः । नस्य सदृशत्वात् सानुनासिको लकारः । उत् स्थानम् । उत् स्तम्भनम् ।

## उदः स्थास्तम्भ्वोः पूर्वस्य (८. १. ६१)

उदः परयोः स्थास्तम्भ्वोः पूर्वस्य सवर्णः स्यात् ।

## आदेः परस्य (१. १. ५४)

परस्योच्यमानं कार्यं तस्यादेः स्यात् । इति सकारस्य सोष्मत्वेन सदृशः थकारः । तस्य 'झरो झरि —' (८-४-६५) इति लोपः । उत्थानम् । उत्तम्भनम् । वाक् हिता । जश्त्वे कृते ।

---

विधेश्चरितार्थत्वादन्यत्राप्रवृत्तेरिति भावः । यवादिगणे दकारनिपातनाद् मदोदग्राः ककुद्मन्त इत्यत्र न । जश्त्वे कृत इति । एतत्तु प्रक्रियाकौमुद्यनुसारेणोक्तम् । मनोरमायां तु तदो दान्तत्वेन भाविन्यवसान(भा?भङ्)गे प्रागेव 'वावसाने' इति चर्त्वाप्रवृत्तेर्जश्त्वोपन्यासोऽनुपपन्न इति स्थितम् । **चयो द्वितीयाः शरि पौष्करसादेः** । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् । तस्यापत्यं पौष्करसादिराचार्यः । बाह्वादित्वादिञ् । अनुशतिकादित्वादुभयपदवृद्धिः ॥ **उदः स्थास्तम्भ्वोः पूर्वस्य** । अनुस्वारस्य ययीत्यतः समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्याह — **पूर्वस्य सवर्ण** इति । **सोष्मत्वेनेति** । ऊष्मत्वं महाप्राणत्वम् । उपलक्षणं चैतत् । अघोषत्वेनेति विज्ञेयम् । सोष्मत्वमात्रं तु धकारस्याप्यस्ति ।

### झयो होऽन्यतरस्याम् (८. ४. ६२)

झयः परस्य हस्य वा पूर्वसवर्णः स्यात् । हस्य सोष्मत्वनादघोषैः सदृशतमो घः । वाग्घिता । वाग् हिता । अप् शैत्यम् ।

### शश्छोऽटि (८. ४. ६३)

झयः परस्य शस्याटि परे वा छत्वं स्यात् । अप्छैत्यम् । अप् शैत्यम् । 'शश्छोऽमीति वाच्यम्' (वा० ८-४-६३) । तेन लकारमकारादौ परेऽपि स्यात् । त्रिष्टुप्छ्लोकः । त्रिष्टुप् श्लोकः । तच्छ्मश्रु तच्श्मश्रु । अत्र तस्य चुत्वम् । हरिम् स्तौमि, इत्यत्र ।

### मोऽनुस्वारः (८. ३. २३)

पदान्तस्य मस्य हलि परेऽनुस्वारः स्यात् । हरिं स्तौमि । अनुस्वारस्याच्त्वपक्षेऽचः परत्वात् 'अनचि चे'ति सस्य द्वित्वम् । हल्त्वपक्षे तु नेति हरदत्तः । यशान् सि, क्रम् स्यन्ते ।

### नश्चापदान्तस्य झलि (८. ३. २४)

अपदान्तस्य नस्य मस्य च झलि परेऽनुस्वारः स्यात् । यशांसि, क्रंस्यन्ते । गम् ता, अन् चति । मश्च नश्चानुस्वारे कृते ।

### अनुस्वारस्य ययि परसवर्णः (८. ४. ५८)

ययि परेऽनुस्वारस्य परसवर्णः स्यात् । नासिक्यत्वात् नकार[2]ञकारौ । गन्ता । अञ्चति । अत्र परसवर्णस्यासिद्धत्वा'दनचि चे'ति नञयोर्द्वित्वाभावे प्राप्ते, 'द्वित्वे कार्ये परसवर्णः सिद्धो वाच्यः' । इति सिद्धत्वाद् द्वित्वम् ।

### वा पदान्तस्य (८. ४. ५९)

पदान्तस्यानुस्वारस्य ययि परसवर्णो वा स्यात् । त्वङ्कृष्णः । त्वाँव्वन्दे । त्वाँय्याचे । (यँल्लोकम् ।) विकल्पात् त्वं कृष्ण इत्यादि । यवलेषु परेषु सानुनासिकास्त एव ।

---

झयो होऽन्यतरस्याम् । जश्त्वे कृत इति । पूर्वसवर्णस्यासिद्धत्वादिति भावः ॥ नश्चापदान्तस्य झलि । क्रंस्यन्त इति । 'वृत्तिसर्गतायनेषु क्रम'

---

१. 'रः ।' क. ग. पाठः. २. 'ति द्वित्वा' क. ख. पाठः.

## हे मपरे वा (८. ३. २६)

मपरे हकारे परे मस्य मं एव वा स्यात् । पक्षेऽनुस्वारः । ह्मल चलने । किम् ह्मलंति । किं ह्मलंति । 'यवलपरे हे सानुनासिका यवला वा वाच्याः' । अहयँह्यः । हरिवँह्वयन् । चिरलँह्लादी । वेत्युक्तेः अहं ह्य इत्यादि ।

## नपरे नः । (८. ३. २७)

नपरे हे परे मस्य नत्वं वा स्यात् । पापन्ँह्नुते । पापं ह्नुते ।

## ङ्णोः कुक् टुक् शरि (८. ३. २८)

पदान्तयोर्ङकारणकारयोः शरि परे क्रमात् कुक्टुकावागमौ वा स्तः । तिर्यङ्क् सरति । सुगण्ट् षट्पदः । तिर्यङ् सरति । सुगण् षट्पदः । द्विट् सैन्यः । जश्त्वे कृते ।

## डः सि धुट् (८. ३. २९)

धुटिति वृत्तिपाठः । पदान्तात् डात् परस्य सस्य वा धुडागमः स्यात् द्विड्ध्सैन्यम् । द्वयोश्चर्त्वम् । 'न पदान्ताट्टो —' (८-४-४२) इति ष्टुत्वाभावः । द्विट्त् सैन्यम् । द्विट्सैन्यम् ।

## नश्च (८. ३. ३०)

पदान्तान्नात् परस्य सस्य धुड् वा स्यात् । सन् त् सौम्यः । सन्सौम्यः । सन् शौरिरित्यत्र ।

---

इत्यात्मनेपदम् । 'स्नुक्रमो'रिति नेट् । झलीति किम् । मन्यते ॥ **ङ्णोः कुक् टुक् शरि** । कुक्टुकोः कित्त्वेन पूर्वान्तत्वात् प्राङ् क् सायेत्यत्र सात्पदाद्यो-रिति षत्वं न । सुगण् ट् सायेत्यत्र न पदान्ताट्टोरिति ष्टुत्वं न ॥ **डः सि धुट्** । उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभिप्रेत्याह — **सस्येति** । धुटः प(रत्वा ? रा)दित्वे प्रयोजनमाह — **न पदान्तादित्यादिना** । **द्विट्त् सैन्यम्** ।

---

१. 'मत्वं स्या' क., 'मत्वं वा स्या' च. छ. पाठः. २, ३. 'लयति' ग. पाठः.

## शि तुक् (८. ३. ३१)

पदान्तस्य नस्य शे परे वा तुक् स्यात् । सन् त् शौरिः । सन् शौरिः । श्चुत्वम् । सञ् च् शौरिः । सञ् शौरिः । 'शश्छोऽटि' (८-४-६३) इति वा छत्वे । 'झरो झरि सवर्णे' इति चलोपः । सञ्छौरिः । (सञ्च् छौरिः) सञ्च् शौरिः । सञ्शौरिः ।

## ङमो ह्रस्वादचि ङमुण्णित्यम् (८. ३. ३२)

ह्रस्वात् परात् पदान्तात् ङमः परस्याचो नित्यं ङमुट् स्यात् । ङमुडिति ङम् प्रत्याहारस्यागमत्वेनोक्तेः ङुट्, णुट्, नुट्, इत्यागमाः । प्रत्यङ्ङर्कः । सुगण्णीश्यः । स्फुरन्नास्ते । ह्रस्वादित्युक्ते महानच्युतः । पुम् कोकिलः ।

## पुमः खय्यम्परे (८. ३. ६)

अम्परे खयि परे पुंशब्दस्य संहितायां रुः स्यात् । 'अत्रानुनासिक' इति वानुनासिकः । 'अनुनासिकात् पर' इति पक्षेऽनुस्वारः । 'सम्पुंकानामि'ति सः । पुँस्कोकिलः । पुंस्कोकिलः । एवं पुँस्पुत्रः पुंस्पुत्रः । अम्पर इत्युक्तेः पुंक्षेत्रमित्यत्र रुत्वं न । 'ख्याधातोस्तु यकारः शकारवदिष्यते' । तेन पुंख्यातिरित्यादावम्परत्वक्षयाद् न रुः । क्रीडन् चक्री, जनान् त्राता ।

---

चर्त्वस्यासिद्धत्वाच्चयो द्वितीया इति न प्रवर्तते ॥ शि तुक् । शीति सप्तमी पूर्वत्र कृतार्थाया न इति पञ्चम्याः षष्ठीं कल्पयतीत्याह — नस्येति । प्रकृतस्य धुट एवानुवृत्तौ सञ् च्छौ (र? रि)रित्यादौ शश्छोऽटीति छत्वं न स्यात् । तस्य हि पदान्ताज् झयः परस्य शस्य छः इत्यर्थो भाष्ये स्थितः । अतः पूर्वान्तस्तुक् कृतः । इह तुक्छत्वलोपानां विकल्पनात् ञ्च्शाः ञ्शौ ञ्छौ ञ्च्छ इति चत्वारि रूपाणि ॥ ङमो ह्रस्वादचि ङमुण्नित्यम् । ङमुटः परादित्वं कुर्वन्नास्त इत्यत्र पदान्तस्येति णत्वप्रतिषेधार्थम् ॥ पुमः खय्यम्परे ।

## नश्छव्यप्रशान् (८. ३. ७)

अम्परे छवि परे नान्तस्य पदस्य रुः स्यात् नतु प्रशान्-शब्दस्य । क्रीडर् चक्री । जनार् त्राता । प्राग्वदनुनासिकानुस्वारौ ।

## खरवसानयोर्विसर्जनीयः (८. ३. १५)

खरि परे अवसाने च पदान्तस्य रेफस्य विसर्गः स्यात् ।

## विसर्जनीयस्य सः (८. ३. ३४)

खरि परे विसर्गस्य सः स्यात् । सस्य श्चुत्वम् । क्रीडँश्चक्री । जनाँस्त्राता । क्रीडंश्चक्री । जनांस्त्राता । अम्पर इत्युक्तेः भवान् त्सरुकः । अप्रशानित्युक्तेः प्रशान् चरति ।

## नॄन् पे (८. ३. १०)

इत्येष रुः श्रौतमध्यस्थः श्रौत ऊह्यते । वृत्तौ नोक्तम् । वासुदेवो 'नॄः पान्ती'ति प्रयुक्तवान् ।

## कानाम्रेडिते (८. ३. १२)

---

पुंसः संयोगान्तलोपे कृतेऽवशिष्टभागस्येदमनुकरणं पुमः इति । **ख्याधातोरिति** । **शकारवदिष्यत** इति । असिद्धकाण्डे णत्वानन्तरं 'ख्शाञः शस्य यो वे'ति शकारस्य यत्वविधानादित्यर्थः । **अम्परत्वक्षयादिति** । रुत्वं प्रति यत्वस्यासिद्धत्वादिति ज्ञेयम् । एतच्च यत्वविधानं 'ख्या प्रकथने' इत्यस्य धातोः 'चक्षिङः ख्याञ्' इत्यादेशस्य च समानमिति हरदत्तमाधवौ । अन्ये तु ख्याञादेशस्यैवेत्याहुः । तन्मते ख्याधातोः पुंस्ख्यातिरिति रुत्वं स्यादेव ॥ **नॄन्पे इत्येष** इति । श्रौतमध्यस्थः । वैदिकयोः 'दीर्घादटि समानपादे' 'स्वतवान् पायौ' इत्यनयोर्मध्यस्थ इत्यर्थः । वृत्तौ नोक्तं, श्रौतत्वमिति शेषः । नॄनित्यस्य रुः स्याद् वा पकारे परे इति सूत्रार्थः । रोश्च 'कुप्वोः ᳲकᳲपौ चे'ति विसर्जनीयोपध्मानीयौ वा । नॄँᳲपान्ति नॄंᳲपान्ति । नॄँः पान्ति नॄंः पान्ति । नॄन् पान्ति । नॄन्प इत्यस्मिन् सूत्रे अकार उच्चारणार्थः । तेन नॄंः पुनातीत्यादावपि रुत्वं स्यादेव ॥ **कानाम्रेडिते** । आम्रेडित इत्युक्तेः कान् कान् पश्यसीत्यत्र न ।

कानित्यस्याम्रेडिते परे रुः स्यात् । कार् कान् ।

'सम्पुमि'त्यादिना सत्वमनुस्वारानुनासिकौ ।

कांस्कान् वदामि काँस्कान् वा कान्कानित्यपि कौमुदी ॥

वोप्पदेवकृतविचारचिन्तामणिमुग्धबोधदुर्गसिंहवृत्तितट्टीकापाणिनीय-मतदर्पणकविकल्पद्रुमादयः सर्वत्र कौमुद्युक्तेर्मूलम् ।

इति हल्स[illegible]

## विसर्जनीयस्य स [illegible] ३. ३४)

श्चुत्वष्टुत्वे । दिवस्त्राता । हरिश्चश्री । हरष्टङ्की । एषु 'अनचि च' (८-४-४७) इति सशषाणां द्वित्वम् । 'शरः खयो द्वे स्त' इति तचटानामपि द्वित्वमूह्यम् ।

## शर्परे विसर्जनीयः (८. ३. ३५)

शर्परे खरि परे विसर्गस्य विसर्ग एव स्यात्, नान्यत् । शूरः त्सरुकः। शरैः क्षतः । खयः परस्य द्वे स्त इति मतेऽत्र सषयोर्वा द्वित्वं ज्ञेयम् । विसर्गᳲकᳲपां व्यञ्जनत्वादचः परत्वाभावात् तकयोस्तु न द्वित्वम् ।

## वा शरि (८. ३. ३६)

शरि परे विसर्गस्य विसर्गो वा स्यात् । पक्षे सत्वम् । पक्षे श्चुत्वष्टुत्वे । द्विषस्सैन्ये । युतश्शक्त्या । गतष्षण्मुखः । विसर्गे द्विषः सैन्ये

---

अत्र ह्येकः किंशब्दः क्षेपे । अपरः प्रश्ने । न द्विरुच्चारितः । कुत्सितान् कान् पश्यसीत्यर्थः । बोप्पदेव इति कश्चित् कविः । वृत्तिः काशिका । तट्टीके न्यासपदमञ्जर्यौ ॥

इति हल्सन्धिः ॥

---

शर्परे विसर्जनीयः । सत्वजिह्वामूलीयोपध्मानीयानामयमपवादः । यदि तु शर्परे नेत्येवोच्यते तर्हि प्रकृते सत्वे निषिद्धेऽपि शरैः क्षत इत्यदौ

इत्यादि । 'खर्परे शरि विसर्जनीयस्य वा लोपो वाच्यः' (वा० ८-३-३६) । शाकल्यमतेन द्वित्वाभावे सत्येकसकारार्थं लोपोक्तिः । हरि स्फुरति । लोपाभावे वा शरीति सत्वविसर्गौ । हरिस्स्फुरति । हरिः स्फुरति ।

## कुप्वोः ≍क≍पौ च (८. ३. ३७)

कवर्गपवर्गरूपे खरि परे विसर्गस्य क्रमादेतौ स्तः । चकाराद् विसर्गश्च । तयोः कपावुच्चारणार्थौ । कृष्ण≍ क्रीडति । कृष्णः क्रीडति । दैत्य≍ पतति । दैत्यः पतति । तपःख्यातिरित्यादौ ख्याधातोर्यस्य शवद्भावात् 'शर्परे —' (८-३-३५) इति विसर्ग एव ।

## सोऽपदादौ (८. ३. ३८)

अपदाद्योः कुप्वोः परयोः विसर्गस्य सः स्यात् । पाशकल्प-काम्यकप्रत्ययेष्वेवैतत् । यशस्पाशम् । तमस्कल्पम् । श्रेयस्काम्यति । तपस्केन । 'अनव्ययस्येति वाच्यम्' (वा० ८-३-३८) । स्वःपाश-मित्यादि । काम्ये रेफान्तानां सत्वं न । गीः काम्यति । धूः काम्यति । पाशादौ तु स्यात् । गीस्पाशा ।

## इणः षः (८. ३. ३९)

अस्मिन् कुप्वोः प्रकरणे विहितस्य सस्येणः परत्वे षत्वं स्यात् इति हरोक्तव्याख्यानात् सस्य षः । गीष्पाशा ।

## इदुदुपधस्य चाप्रत्ययस्य (८. ३. ४१)

इदुदुपधशब्दानामप्रत्ययविसर्गस्य कुप्वोः परयोः षः स्यात् । 'इणः षः' (८-३-३९) इति षः । निष्फलम् । दुष्कृतम् । निर्दुर्-

जिह्वामूलीया(स्यादि ? दिः) स्यात् । विसर्जनीयवचनात्तु विकारमात्रं बाध्यत इ-त्याशयेनाह— नान्यदिति । न द्वित्वमिति । अचूत्वपक्षे स्यादेव ॥ कुप्वोः ≍क≍पौ च । जिह्वामूलीयस्य खत्वात् 'खरवसानयोरि'ति विसर्गः । ('शर्परे खरि' ? 'खर्परे शरि') इति विसर्गस्य वा लोपः ॥ सोऽपदादौ । सूत्रे व्य-त्ययेन अपदादाविति द्विवचनस्थाने एकवचनमित्याह— अपदाद्योरिति ॥

१. 'रे क' क. ख. पाठः.

हिराविश्चतुष्प्रादुसामेवैतत् । तेन मुहुरादेर्न । दुसः षत्वाद् दुष्खमिति टीकासर्वस्वे । सविसर्गं तु दुःखं चान्द्रमते किल साध्यम् । निष्पन्द इति षत्वं चिन्त्यमिति वामनः । निःस्पन्द इत्यत्र विसर्गस्य कुपुपरत्वाभावादप्राप्तिरिति ।

### द्विस्त्रिश्चतुरिति कृत्वोर्थे (८. ३. ४३)

क्रियाभ्यावृत्त्यर्थानामेषां (विसर्गस्य) कुप्वोर्वा सः स्यात् । 'इणः षः' (८-३-३९) । द्विष्करोति । द्विः करोति । द्विष्पचति । द्विः पचतीत्यादि ।

### इसुसोः सामर्थ्ये (८. ३. ४४)

सम्बद्धार्थत्वे इसुसन्तयोर्विसर्गस्य कुप्वोर्वा सः स्यात् । हविष्खादति । सर्पिष्पिबति । धनुष्कर्षति । वपुष्पश्यति । विकल्पात् हविः खादति इत्यादि । मिथोऽसम्बन्धे तु न । तिष्ठतु सर्पिः पिबोदकम् ।

### नित्यं समासेऽनुत्तरपदस्थस्य (८. ३. ४५)

समासे त्वनुत्तरपदस्थस्य इसुसोर्विसर्गस्य कुप्वोः परयोः नित्यं सः स्यात् । शोचिष्केशः । हविष्पाकः । वपुष्कान्तिः । धनुष्पाणिः । उत्तरपदस्थत्वे तु पूर्वेण विकल्पोऽपि नेष्यते । दृढधनुःपाणिरित्येव । असमासे तु उत्तरपदस्थस्यापि पूर्वेण विकल्पः । दृढधनुष्कर्षति । दृढधनुः कर्षति ।

### अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य [(८. ३. ४६)

अतः परस्यानव्ययस्यानुत्तरपदस्थस्य विसर्गस्य समासे कृकमिधात्वोः कंसादिषु च परेषु नित्यं सः स्यात् । यशस्करः । यश-

---

इणः षः । हरोक्तव्याख्यानादिति । अन्ये तु पूर्वस्यापवादोऽयम् । तेन विसर्गस्यैव षो विधीयत इत्याहुः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ द्विस्त्रिश्चतुरिति कृत्वोर्थे । वा सः स्यादिति । चतुरशब्दस्य (उ ? इ)दुदुपधस्येति प्राप्ते इतरयोरप्राप्ते विकल्पो विधीयत इत्युभयत्रविभाषेयम् ॥ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य । अयस्कुशेति । अयस्सहिता कुशा

स्कामः । पयस्कंसः । पयस्कुम्भः । अयस्पात्रम् । अयस्कुशा । कुशा खलीनम् । द्राघीयस्कर्णी । कर्णी गोबन्धनरज्जुः । अव्ययस्य न । स्वःकामः । उत्तरपदस्थत्वेऽपि न । सुयशःकामः ।

अधःशिरसी पदे (८. ३. ४७)

समासेऽनुत्तरपदस्थस्याधःशिरसोर्विसर्गस्य पदे परे सः स्यात् । अधस्पदम् । शिरस्पदम् ।

कस्कादिषु च (८. ३. ४८)

एषु विसर्गस्य सः स्यात् । इणः परत्वे ष ऊह्यः । कस्ककौतस्कुतशुनस्कर्णसद्यस्कालसाद्यस्क्रभास्करायस्कान्तायस्कुण्डतमस्काण्डमेदस्पिण्डभ्रातुष्पुत्रादयः । कस्कोऽयमेति । कुतःकुत आगत इत्यर्थे कौतस्कुतोऽयम् । साद्यस्क्रः क्रतुः । कुण्डं स्थाली । आद्युक्तेराकृतिगणोऽयम् ॥

इति विसर्गसन्धिः ॥

'स्वौजसमौडि'त्यादिवक्ष्यमाणेन प्रथमैकवचनं सु । उलोपः । कृष्ण स् अर्च्यः । सुबन्तत्वेन पदत्वे,

ससजुषो रुः (८. २. ६६)

सान्तस्य पदस्य सजुष्शब्दस्य चान्त्यस्य रुः स्यात् । कृष्ण र् अर्च्यः ।

---

अयस्कुशा, नत्वयसो विकार इति । 'जानपदे'ति ङीष्प्रसङ्गात् ॥ अधःशिरसी पदे । सूत्रे अधःशिरसी इति षष्ठीस्थाने प्रथमेत्याह — अधःशिरसोरिति ॥ कस्कादिषु च । भ्रातुष्पुत्र इति । 'इसुसोः सामर्थ्ये' इत्यनेन सिद्धावपीह पाठ एकदेशनिमित्तादुत्तरस्य विसर्गस्य षत्वं नेति ज्ञापनार्थम् । तेनेह न मातुः कृपा ॥

इति विसर्गसन्धिः ॥

---

ससजुषो रुः । जश्त्वापवादः । पदस्येत्यनुवर्तते । तच्चेह विशेष्यमित्याह — सान्तस्य पदस्येति । सजुष्शब्दस्येति । अत्रापि सजुष इत्यादावतिप्रसङ्गवारणाय पदस्येत्येतद् योज्यमिति स्थितं मनोरमायाम् ॥

---

१. 'सकारान्त' ख. पाठः.

## अतो रोरप्लुतादप्लुते (६. १. ११३)

अप्लुतादकारात् परस्य रोरप्लुतेऽकारे परे उत्वं स्यात्। कृष्ण उ अर्च्यः। 'आद् गुणः' (६-१-८७)। 'एङः पदान्तादति' (६-१-१०९) इति पूर्वरूपम्। कृष्णोऽर्च्यः। सुवर्चा ३ अत्र। नमः अ३च्युत इत्यकारयोः 'गुरोरनृतः—' (८-२-८६) इति प्लुते कृते तस्यासिद्धत्वादुत्वं मा भूदित्यप्लुतादप्लुत इत्युक्तिः। अत्र हि सुवर्चा ३ यत्र, नमया ३ च्युत इति वक्ष्यमाणं यत्वमेव।

## हशि च (६. १. ११४)

अप्लुतादतः परस्य रोर्हशि परे उत्वं स्यात्। कृष्णो वन्द्यः। रोरित्युक्त्या रेफमात्रस्य उत्वं न। प्रातरयम्। अन्तर्गतः। सौ कृते, कृष्ण स् एषः। प्रथमाबहुवचने जासि कृते गोपास् इमे। सस्य रुत्वम्।

## भोभगोअघोअपूर्वस्य योऽशि (८. ३. १७)

भोभगोअघोपूर्वस्यावर्णपूर्वस्य च रोरशि परे यत्वं स्यात्। अयादेशोक्तवत् पक्षे लघुप्रयत्नतरो लोपश्चेति त्रिरूपम्। कृष्णयेषः। गोपायिमे। कृष्णयेषः। गोपायिमे। कृष्ण एषः। गोपा इमे। भवन् इह। भगवन् अत्र। अघवन् एहि। 'विभाषा भवद्भगवदघवतामोच्चावस्य' (वा० ८-३-१)। एषां सम्बुद्धावन्त्यस्य रुत्वमवशब्दस्य ओत्वं

---

अन्त्यस्येति। उभयशेषः॥ अतो रोरप्लुतादप्लुते। भो भगो इति यत्वस्यापवादः। अतीत्युदिति चानुवर्तते। अत इति तपरः किम्। देवा अत्र। अतीति तपरः किम्। श्व आगन्ता। असिद्धत्वादिति। अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। दीर्घनिवृत्त्या चरितार्थत्वात् तपरकरणस्य तु न सामर्थ्यमिति भावः॥ हशि च। अप्लुतादिति किम्। सुस्रोत ३ देहि। रोरित्युक्त्येति। 'ससजुषो रु'रिति सूत्रेण विहितस्योकारानुबन्धविशिष्टस्य रेफस्य ग्रहणादित्यर्थः। उत्वं प्रति रुत्वस्यासिद्धत्वं तु न। रुत्वमनूद्योत्वविधानसामर्थ्यात्॥ भोभगोअघोअपूर्वस्य योऽशि। अशीति किम्। देवाः सन्ति। यद्यपीह यत्वस्यासिद्धत्वाद् विसर्गो लभ्यते, तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद् यत्वं स्यात्। नह्ययमल्विधिः। रोरिति समुदायरूपाश्रय-

---

1. 'यत्वम्' ख. ग. पाठः.

च वा स्यात् । भो रु इह । भगो रु अत्र । अघो रु एहि । 'भोभगो' इति रोर्यत्वम् ।

### ओतो गार्ग्यस्य (८. ३. २०)

ओकारात् परस्य पदान्तस्यालघुप्रयत्नतरस्य यस्य नित्यं लोपः स्यात् । गार्ग्योक्तिः पूजार्था । भो इह । भगो अत्र । अघो एहि ।

भाग्वल्लघुप्रयत्नत्वे भोयिहेत्यादि दृश्यताम् ।
तथा भवन्निहेत्यादि रुत्वाभावमते ङमुट् ॥

### हलि सर्वेषां (८. ३. २२)

हलि परे तु 'भोभगोअघोअपूर्वस्य' (८-३-१७) इत्युक्तयकारस्य सर्वमतेऽपि लोपः स्यात् । भो हरे । भगो नमस्ते । अघो याहि । पापा वर्ज्याः । अवर्णपूर्वत्वाभावे तु रोः श्रुतिरेव । हरिरयम् । विभुर्नम्यः ।

### रोऽसुपि (८. २. ६९)

असुपि परेऽह्नोऽन्त्यस्य रेफादेशः स्यात् । अहरिदम् । अहर्गणः । सुपि परे तु 'अहन्' (८-२-६८) इति रुत्व उत्वे चाहोभ्यामिति वक्ष्यते । 'अह्नो रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' (वा० ८-२-६८) । तस्योत्वम् । अहोरूपम् । अहोरात्रम् । अहोरथन्तरम् । अन्यत्रापि रेफे परेऽह्नो रुत्वमेवेति भोजः । अहो रम्यम् । अहर्पतिः । रत्वे कृते रस्य खरि विसर्गे प्राप्ते 'अहरादीनां पत्यादिषु रस्य वा रेफो वाच्यः' (वा० ८-२-७०) । अहर्पतिः । गीर्पतिः धूर्पतिः । पक्षे अहःपतिः । गीःपतिरित्यादि । उषर्बुध नित्यम् । गीष्पतिस्तु कस्कादिः । पुनर् रमते । सोरुत्वे विष्णु र् रमया ।

### रो रि (८. ३. १४)

रेफस्य रेफे परे लोपः स्यात् ।

---

णात् ॥ ओतो गार्ग्यस्य । पदान्तस्य किम् । तोयम् ॥ हलि सर्वेषाम् । हलि किम् । देवायिह ॥ रोऽसुपि । रुत्वस्यापवादोऽयम् । तस्मिन् हि सति

## ढ्रलोपे पूर्वस्य दीर्घोऽणः (६. ३. १११)

ढकाररेफयोर्लोपनिमित्ते परे पूर्वस्याणो दीर्घः स्यात् । पुना रमते । विष्णू रमया । रुत्वे कृते कृष्णर् रम्य इत्यत्र 'रो रि'(८-३-१४) इति लोपस्य परत्वेऽप्यसिद्धत्वाद् 'हशि च' (६-१-११४) इत्युत्वमेव । पूर्वत्रासिद्धे हि नास्ति परप्राबल्यम् । कृष्णो रम्यः । 'प्रचेतसो राजनि रुत्वं रत्वं च वाच्यम्'(वा० ८-२-७०)। रुत्वे उत्वं, रत्वे 'रो री'ति लोपो दीर्घश्च । प्रचेतो राजन् । प्रचेता राजन् । एष स् कृष्णः । स स् रामः ।

## एतत्तदोः सु लोपोऽकोरनञ्समासे हलि (६. १. १३२)

अककारयोरेतत्तदोः सोरनञ्समासे हलि परे लोपः स्यात् । एष कृष्णः । स रामः । ककारयोगे तु न । एषकः कृष्णः । सको रामः । नञ्समासेऽपि न । अनेषो[1] रामः । असः कृष्णः । अहल्परत्वेऽपि न । एषोऽच्युतः । सोऽच्युतः ।

---

अहर्गणः अहरिदमित्यत्र उत्वयत्वे प्रसज्येयाताम् ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** । ढकाररेफौ लोपयतीति ढ्रलोप इत्यभिप्रेत्याह— **ढकाररेफयोर्लोपनिमित्त** इति । ढकारे रेफे च परे इत्यर्थः । अणः किम् । तृढः । वृढः । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । लीढः । लिहेः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपाः । अजर्घाः । 'गृधु अभिकाङ्क्षायाम्' । अस्माद् यङ्लुक् । सिपि द्विर्वचने गुणः । हल्ङ्यादिलोपः । भष्भावः । जश्त्वम् । 'दश्चे'ति रुत्वम् । 'रो री'ति लोपः । दीर्घः । **नास्ति परप्राबल्यमिति** । सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे परम्' इत्यस्याप्रवृत्तेरित्यर्थः । उक्तं च भाष्ये — 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति ॥ **एतत्तदोः सु लोपोऽकोरनञ्समासे हलि** । एतत्तदोरिति सुशब्दापेक्षया सम्बन्धलक्षणा षष्ठी । अतश्च सापेक्षत्वेनासमर्थत्वात् समासाप्रवृत्तेः सु इति लुप्तषष्ठीकं पृथक्पदमित्याह — **एतत्तदोः सोरिति** एतत्तदर्थगतैकत्वसंख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति परमैष ददातीत्यादौ न स्यात् । अत्र हि तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् । सोरेतत्तदर्थगतसंख्यावाचित्वम-

---

१. 'षः कृष्णः असो रामः । अहल्' घ. पाठः.

## सोऽचि लोपे चेत् पादपूरणम् (६. १. १३४)

स इत्यस्याचि सोर्लोपो लोपे चेत् पादपूरणम् । तेन श्लोकेष्विदं कार्यम् । सैकः कृष्णो जगत्त्रये इति ।

"संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥"

इत्युक्तेर्वाक्येष्वसन्धिरपि न दोषः ।

इति प्रक्रियासर्वस्वे संहिताखण्डः ॥

---

## अथ कृत्खण्डः ।

गहनतरग्रन्थार्थानतिविततान् वीक्ष्य मङ्क्षु संक्षिपताम् ।
स्खलितमपि सम्भवेन्नस्तत्र तु विबुधा विमत्सराः शरणम् ॥

---

र्तीति शब्दान्तरत्वेऽपि लोपः स्यादेव । अर्थद्वारकसम्बन्धाश्रयणे ज्ञापकं तु अनञ्समास इत्येतत् । अन्यथा अनेषो रामः, असः कृष्णः इत्यादौ नञ्विशिष्टस्य शब्दान्तरत्वेन सोरेतत्तदोर्विहितत्वाभावेनैव लोपाप्रवृत्तेर्निषेधोऽनर्थकः स्यात् । एषकः कृष्णः सको राम इति । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषया साकच्कावप्येतत्तच्छब्दावेव ॥ सोऽचि लोपे चेत् पादपूरणम् । अत्र पूर्वसूत्राद् बहुलग्रहणानुवृत्तेरवधारणं लभ्यते । तेन 'सोऽहमाजन्मशुद्धानामि'त्यादौ लोपे सत्यसति वा यत्र पादपूरणं भवति तत्र लोपो नेत्याहुः ।

संहितैकपद इति । एकपदे रामा इत्यादौ । धातूपसर्गयोरधीत इत्यादौ । समासे रमेश इत्यादौ । वाक्ये गामानयेत्यादौ । तुशब्दो विशेषद्योतकः । तमेव विशेषमाह — सेत्यादिना । श्लोको यद्यपि वाक्यं तथाप्यालङ्कारिकैः 'विसन्धि हतवृत्तमि'त्यादिना सन्ध्यकरणस्य दोषत्वेन परिगणितत्वात् तत्र संहिताया अविवक्षा न कार्या ॥

इति स्वादिसन्धिः ।

इति सर्वस्वप्रकाशिकायां संहिताखण्डः ॥

---

अथ विशालं कृत्खण्डमारभमाणः स्खलितसम्भवमाशङ्क्य विदुषः क्षमामर्थतः प्रार्थयते — गहनतरेत्यादिश्लोकेन । तत्र पूर्वार्धेन स्खलितसम्भावनायां

अथ सुपां प्रातिपदिकाश्रयत्वात् प्रातिपदिकानां च कृत्तद्धित-समासान् विना दुर्लभत्वात् कृदादयस्तावत् कथ्यन्ते ।

**प्रत्ययः ( ३. १. १)**

इतः परं विधीयमानाः प्रत्ययाख्याः ।

**परश्च (३. १. २)**

ते च प्रकृतेः परा एव स्युः ।

**धातोः (३. १. ९१)**

इदानीं धातोः परे प्रत्यया उच्यन्ते ।

**तत्रोपपदं सप्तमीस्थम् (३. १. ९२)**

अस्मिन् धात्वधिकारे सप्तम्योक्तम् उपपदाख्यम् ।

---

हेतुरुक्तः । गहनतराः अतिदुष्प्रवेशाः । मङ्क्षु क्षिप्रम् । स्खलितशब्देनात्र प्रमादो लक्ष्यते ।

सुबन्तखण्डात् प्राक् कृदादीनां व्युत्पादने कारणमाह — सुपामित्यादिना । तावत् प्रथममित्यर्थः ॥ प्रत्ययः । इतः परमिति । आ पञ्चमाध्यायपरिसमाप्तेरिति शेषः । अधिकारोऽयम् ॥ परश्च । अत्राधिकारः परिभाषा वेति पक्षद्वयम् । तयोः परिभाषापक्षमाश्रित्याह — ते चेत्यादि ॥ धातोः । इदानीम् आ तृतीयाध्यायपरिसमाप्तेरित्यर्थः । अयमप्यधिकारः । 'धातोरेकाच' इति सूत्राद् धातोरित्यनुवर्तमानेऽपि पुनर्धातुग्रहणं कृदुपपदसंज्ञे इतः पूर्वत्र मा भूतामिति धातुशब्दमुच्चार्य विहितस्यैवार्धधातुकसंज्ञार्थं च । इह पुनर्धातु-ग्रहणे क्रियमाणे 'आर्धधातुकं शेष' इत्यत्रानुवृत्तस्यास्य च द्वयोरुपस्थितौ तत्रैकः अधातुप्रत्ययानां संज्ञानिवृत्त्यर्थं प्रत्ययेनान्वेति । अपरो धातुप्रत्ययेन, धातोर्धातुप्रत्यय इति । तेन धातुशब्दमुच्चार्य विहितः प्रत्यय आर्धधातुकसंज्ञ इत्ययमर्थो लभ्यते । अतो लूभ्यामित्यादौ भ्यामादेर्धातोर्विहितत्वेऽपि आर्धधातुकत्वाभावाद् इड्गुणौ न । भ्यामादयो हि 'ङ्याप्प्रातिपदिकादि'ति विहिताः न धातुशब्दमुच्चार्य ॥ तत्रोपपदं सप्तमीस्थम् । सप्तम्यन्ते कर्मणीत्यादिपदे वाच्यत्वेन स्थितं कुम्भादि सप्तमीस्थम् । सप्तम्योक्तमिति । सप्त-

---

१. 'राः' ख. घ. पाठः.

## तिङ्शित् सार्वधातुकम् (३. ४. ११३)

तिङः शितश्च प्रत्ययाः सार्वधातुकाख्याः ।

## आर्धधातुकं शेषः (३. ४. ११४)

तिङ्शिद्भ्योऽन्ये 'धातोरि'[1]ति विहिताः प्रत्यया आर्धधातुकाख्याः ।

## कृदतिङ् (३. १. ९३)

अस्मिन् धात्वधिकारे तिङ्वर्जिताः प्रत्ययाः कृत्संज्ञाः ।

## कर्तरि कृत् (३. ४. ६७)

कृत्प्रत्ययः सर्वः कर्तरि स्यात् । पाचक इति पचनस्य कर्ता ।

## कृत्याः प्राङ् ण्वुलः (३. १. ९५)

ण्वुलः प्रागुक्तास्तव्यदादयः षट् कृतः कृत्यसंज्ञाः ।

## तयोरेव कृत्यक्तखलर्थाः (३. ४. ७०)

कृत्याः क्तः खलर्थाश्च भावकर्मणोरेव स्युः । अकर्मकाणां भावे सकर्मकाणां कर्मणीति विभागः ।

---

स्यन्तपदेन प्रतिपादितं कुम्भादीत्यर्थः ॥ तिङ्शित् सार्वधातुकम् । तिङः शितश्च प्रत्यया इति । 'धातोरि'त्या तृतीं(याध्या)यपरिसमाप्तेरधिकार इति ह्युक्तम् । अतो धात्वधिकारोक्ता इत्यपि विशेषणं योज्यम् । अन्यथा हरीनित्यादौ शसः सार्वधातुकत्वे 'सार्वधातुकमपिदि'ति ङित्त्वाद् 'घ्ङितीति' गुणः स्यात् ॥ कर्तरि कृत् । यद्यपि कृदुत्पत्तिवाक्यानां ण्वुल्तृजादीनामयं शेषः, तथापि 'करणे ल्युनि'त्यादौ यत्र विशिष्यार्थनिर्देशोऽस्ति तत्राकाङ्क्षाविरहात् ततोऽन्यत्रैवास्योपस्थानम् ॥ कृत्याः प्राङ् ण्वुलः । षट् कृत इति । ते च तव्यत्तव्यानीयरो यत्क्यपौ ण्यच्चेति । केलिमरस्तु वार्त्तिकोक्तत्वादपरिगणनमिति ज्ञेयम् ॥ तयोरेव कृत्यक्तखलर्थाः । विभाग इति । भावेऽकर्मकेभ्य इत्यनुवृत्तेः सकर्मकाणां भावे

---

१. 'तोर्विहि' ग. पाठः. २. 'ऽभवास्त' क. ख. घ. ङ. च. छ. पाठः. ३. 'क्तश्च ख' क. ग. घ. ङ. च. छ. पाठः.

## कृत्यल्युटो बहुलम् (३. ३. ११३)

कृत्याश्च ल्युट् च बहुलं स्युः उक्तादन्यत्रार्थेऽपि स्युरित्यर्थः। ततश्च रमयतीति रमणीयः। रम्यः। दमनीया[1] योषित्। दीपयतीति दीपनीयमौषधम्। इत्यादि कर्तरि। एवं मदसाधनं मद्यम्। तथा स्नानीयं चूर्णम्। यानीयोऽश्वः। दीयतेऽस्मा इति दानीयो विप्रः। समावृत्यतेऽस्मादिति[2] समावर्तनीयो गुरुः। उद्वेजनीयः खलः। तिष्ठन्त्यस्मिन्निति स्थेयो निर्णेता। स्थानीयं नगरम्। शयनीयम्। इत्यादि।

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा [(३. ४. ६८)

एते कृत्यान्ता वा कर्तरि स्युः। भवत्यैश्वर्यं प्राप्नोतीति[3] भव्यः। भव्यमनेनेति भावेऽपि। गायको गातव्यश्च गेयः। प्रवक्ता प्रवक्तव्यश्च[4] प्रवचनीयः। सेवकः सेव्यश्चोपस्थानीयः। जायत इति जन्यो घटः। जन्यमनेन। एवमाप्लाव्यो मुनिः। आप्लाव्यं त्वया। आपात्योऽश्वः। आपात्यं त्वया।

## अर्हे कृत्यतृचश्च (३. ३. १६९)

कृत्यास्तृच्च[5] लिङ् च योग्यार्थे स्युः।

## शकि लिङ् च (३. ३. १७२)

कृत्याश्च लिङ् च शक्यार्थे स्युः। योग्यार्थे—विप्रो न हन्तव्यः। शक्यार्थे—सिंहो न हन्तव्यः।

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च (३. ३. १६३)

लोट् च कृत्याश्च प्रैषाद्यर्थेषु स्युः।

---

१. 'मदनी' क. ख. घ. छ. पाठः. २. 'म' क. ख. छ. पाठः. ३. 'प्नोति' क. पाठः. ४. 'चनीयश्च', ५. 'त्यास्तृच लि' ग. पाठः.

ज्ञातस्य स्मारणं प्रैषः कार्यं पूर्वोदितं त्वया ।
इष्टानुज्ञातिसर्गः स्यात् कर्तव्यं भवतैव तत् ॥
कालाख्यानं प्राप्तकाल उत्थातव्यं सखे! त्वया ।
मीमांसकैर्विधौ चोक्तं लक्ष्यस्त्वावश्यकादसौ ॥

आवश्यकाधमर्ण्ययोर्णिनिः (३. ३. १७०)

कृत्याश्च (३. ३. १७१)

णिनिः कृत्याश्च तयोरर्थयोरेव स्युः । आवश्यके — वेदोऽध्येतव्यः । ऋणवत्त्वमाधमर्ण्यम् । शतं दातव्यमनेन ।

योग्याद्यर्थं विना कृत्याः कर्ममात्रेऽपि सन्त्यमी ।
ज्ञानेन मृज्यमानं हि ज्ञानमृज्यं मुनेर्मनः ॥

इति ।

तव्यत्तव्यानीयरः (३. १. ९६)

सर्वधातुभ्य उक्तार्थेषु तव्यत् तव्य अनीयर् इति प्रत्ययाः स्युः ।

हलन्त्यमिति लुप्येते स्वरार्थावन्तिमौ हलौ ।
तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेषु षट् ॥

तव्यत्तव्ययोः स्वरे भेदः ।

हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा ।
एभिर्धात्वनुबन्धानां लोपे स्यात् प्रत्ययः पुनः ॥

डुकृञ्धातोः, कृ तव्य, कृ अनीय । 'अङ्गस्य' (६-४-१) इत्यधिकारे

सार्वधातुकार्धधातुकयोः (७. ३. ८४)

अनयोः परयोः अङ्गस्य गुणः स्यात् । स च 'इको गुणवृद्धी' (१-१-३) इति इगन्तस्याङ्गस्यैव । इत्यृकारस्य रपरो गुणः । कर्तव्य, कर् अनीय ।

नेत्यभिप्रायः । षडिति । ञकारस्य स्वरार्थत्वेऽप्युपधावृद्ध्यादिप्रयोजनान्तरसद्भावादिहाग्रहणम् । पकारस्यापि क्वचित् तुगादिप्रयोजनान्तरमस्त्येव । तथापि

१. 'श्च । कृ' क. ख. घ. ङ. च. छ. पाठः. २. 'णः स्यात् । क' ग. पाठः.

## रषाभ्यां नो णः समानपदे (८. ४. १)

रेफषकाराभ्यां परस्यैकपदस्थस्य नस्य णः स्यात् ।

## अट्कुप्वाङ्नुम्व्यवायेऽपि (८. ४. २)

उक्तं णत्वमडाद्यैर्व्यवधानेऽपि स्यात् । करणीय । 'कृत्तद्धितसमासाश्च' (१-२-४६) इति प्रातिपदिकत्वात् सुविभक्तिः । कर्तव्यः करणीयो वा धर्मः । कृञः सकर्मकत्वात् कर्मणि । भूधातोस्त्वकर्मकत्वाद् भावे । भू तव्य,

## आर्धधातुकस्येड् वलादेः (७. २. ३५)

वलादेरार्धधातुकस्येडागमः स्यात् । इति तव्यस्येट् । टित्त्वादादौ । धातोर्गुणावादेशौ । भवितव्यं श्रिया । एवं भवनीयं श्रिया । इडनिड्व्यवस्थां तृचि वक्ष्यामः ।

शयितव्यं तु शयनं स्थातव्यं स्थितिरेव हि ।
एवं ल्युडादितुल्येऽपि भावे कृत्यान् हरोऽब्रवीत् ॥

## ऋहलोर्ण्यत् (३. १. १२४)

ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात् । तः स्वरार्थः ।

---

'ऋदोरबि'त्यादौ अनन्यार्थताया दर्शनात् स परिगणित इति ज्ञेयम् ॥ अट्कुप्वाङ्नुम्व्यवायेऽपि । 'रषाभ्यामि'ति पञ्चमीनिर्देशाद् व्यवहितस्याप्राप्तौ वचनमिदम् । अडाद्यैर्व्यवधानेऽपीति । तत्र स(जप ? वै)र्युगपद् व्यवायोऽसम्भवी । एकैकमात्रव्यवाय इत्यपि नार्थः, सरूपाणामित्यादिनिर्देशात् । अतो व्यस्तैर्यथासम्भवं मिलितैश्चेति ज्ञेयम् । 'पदव्यवायेऽपी'ति निषेधं बाधितुमाङ्ग्रहणम् । नुंग्रहणं तत्स्थानिकस्य स्वाभाविकस्य चानुस्वारमात्रस्योपलक्षणार्थम् । तेन 'बृह बृहि वृद्धौ' । इदित्त्वान्नुम् । तस्यानुस्वारः । 'तृंहू हिंसायाम्' । स्वाभाविकोऽनुस्वारः । बृंहणम् । तृंहणम् । उभयत्रापि णत्वं सिद्धम् । 'इवि प्रीणने' । ०न्वनम् । इह 'कृत्यचः' 'इजादेः सनुमः' इति णत्वं न । ल्युडादितुल्येऽपि भावे इति । सिद्धभाव इत्यर्थः ॥ ऋहलोर्ण्यत् । ऋहलोरिति पञ्चम्यर्थे षष्ठी ।

---

१. 'व्यवायेऽपि' ग. पाठः.

## चुटू (१. ३. ७)

प्रत्ययस्यादिभूतौ चवर्गटवर्गावित्संज्ञौ । इति णलोपः ।

## अचो ञ्णिति (७. २. ११५)

अजन्तस्याङ्गस्य ञिति णिति च परे वृद्धिः स्यात् । हृञ् हार्यम् । तॄ तार्यम् । हलन्ताद् एध्यम् । स्पर्ध्यम् ।

## वासरूपोऽस्त्रियाम् (३. १. ९४)

भिन्नरूपाः कृतो विकल्पेन स्युः 'स्त्रियां क्तिन्' (३-३-९४) इत्यादीन् वर्जयित्वा । तेन हर्तव्यं हरणीयमित्याद्यपि । वक्ष्यमाणयोः यत्क्यपोस्तु ण्यता सह सरूपत्वात् तेऽन्योन्यं बाधका एव ।

## अत उपधायाः (७. २. ११६)

ञिति णिति च परेऽङ्गस्योपधाया अतो वृद्धिः स्यात् । वाह्यम् । ग्राह्यम् । समासाह्रा समस्या । 'संज्ञापूर्वको विधिरनित्य' इतीह वृद्धिर्न । 'मव्य बन्धने ।' मव्य् य,

---

ऋ इत्यनेन 'ऋ गतावि'ति धातुरेव न गृह्यते, किन्तु वर्णमात्रं, हला साहचर्यादिति चाह — ऋवर्णान्तादिति ॥ वासरूपोऽस्त्रियाम् । वा असरूप इति छेदः । परिभाषा चेयम् । असरूपपदं व्याचष्टे — भिन्नरूपा इति । केन भिन्नरूप इत्यपेक्षायां प्रकृतः सामान्यविहितप्रत्यय एव प्रतियोगित्वेन गृह्यते । अतस्तेन भिन्नरूपा अपवादप्रत्ययाः भिन्नरूपाः कृत इत्यनेन विवक्षिताः । विकल्पेन स्युरिति । उत्सर्गाणां वा बाधका इत्यर्थः । अतश्चास्मिन् धात्वधिकारे सामान्यविधिर्भिन्नरूपापवादविधिविषयेऽपि विकल्पेन प्रवर्तत इति पर्यवसितोऽर्थः । ण्यता सह सरूपत्वादिति । अत्रानुबन्धभेदे सत्यपि 'नानुबन्धकृतमसारूप्यम्' इत्युक्तत्वात् सरूपा एवैते इत्यभिप्रायः । अस्त्रियामिति किम् । चिकीर्षा । अत्र वि(षय ? शेष)विहितोऽप्रत्ययः सामान्यविहितं क्तिनं बाधत एव ॥ अत उपधायाः । संज्ञापूर्वको विधिरिति । अकार-

---

१. 'द्यादि', २. 'दि व' ग. पाठः.

हलो यमां यमि लोपः (८. ४. ६४)

हलः परेषां यमां क्रमाद् यमि परे वा लोपः स्यात् । ये परे यस्य लोपः, वे परे वस्येति क्रमः । मव् य । यलोपस्य पूर्वत्रासिद्धत्वेनोपधात्वाभावान्न वृद्धिः । मव्यम् । अयं लोपो नित्य इति कौमुदी । वेति वृत्तिः । हन् य ।

हो हन्तेर्ञ्णिन्नेषु (७. ३. ५४)

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हस्य कुत्वं स्यात् । घन् य ।

हनस्तोऽचिण्णलोः (७. ३. ३२)

चिण्णल्वर्जिते ञिति णिति प्रत्यये परे हनेरन्त्यस्य तः स्यात् । घत् य । उपधावृद्धिः । घात्यः । रिच् य । युज् य ।

पुगन्तलघूपधस्य च (७. ३. ८६)

पुगन्तस्य लघूपधस्य चाङ्गस्य सार्वधातुकार्धधातुकयोः परयोरिको गुणः स्यात् ।

चजोः कु घिण्ण्यतोः (७. ३. ५२)

घिति ण्यति च परे चजोः कुत्वं स्यात् । रेक्यं । योग्यम् । मस्जेः कुत्वे सस्य 'झलां जश्–' (८-४-५३) इति जश्त्वम् । मद्ग्यम् ।

न क्वादेः (७. ३. ५९)

कवर्गादेर्धातोः कुत्वं न । संकोच्यम् । कूज्यम् । गर्ज्यम् ।

---

स्यात्र वृद्धिसंज्ञया आकारविधानात् संज्ञापूर्वकत्वम् ॥ हलो यमां यमि लोपः । एतेन माहात्म्यमित्यादौ मलोपो नेत्युक्तम् । वेति वृत्तिरिति । 'झयो ह' इत्यतोऽन्यतरस्यामित्यनुवृत्तेः ॥ हो हन्तेर्ञ्णिन्नेषु । घात्य इति । अत्र हकारप्रत्यययोरानन्तर्याभावेऽपि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादि'ति न्यायात् कुत्वं स्यादेव ॥ चजोः कु घिण्ण्यतोः । 'तेन रक्तं रागादि'ति ज्ञापकादत्र

---

१. 'स्य लोपः । म' घ. पाठः. २. 'म् । अ' क. पाठः.

अजिव्रज्योश्च (७. ३. ६०)

कुत्वं न । व्राज्यम् । अजेस्तु ण्यन्न । आर्धधातुक इत्यधिकारे

अजेर्व्यघञपोः (२. ४. ५६)

घञब्वर्जित आर्धधातुके कर्तव्ये अजेर्वी इत्यादेशः स्यात् । तस्माद् 'अचो यदि'ति वक्ष्यमाणो यदेव । आर्धधातुकत्वाद् गुणः । वेयम् ।

वञ्चेर्गतौ (७. ३. ६३)

कुत्वं न गत्यर्थस्य । वञ्च्यम् । कौटिल्यार्थे वङ्क्यम् ।

ण्य आवश्यके (७. ३. ६५)

आवश्यकार्थे ण्यति परे कुत्वं न । पाच्यं हविः । योग्यादौ पाक्यम् ।

यजयाचरुचप्रवचर्चश्च (७. ३. ६६)

एषां ण्यति कुत्वं न । याज्यम् । याच्यम् । रोच्यम्[2] । प्रवाच्यम् । ऋच स्तुतौ, अर्च्यम् । 'त्यजेश्च न' (वा० ७-३-६६) त्याज्यम् ।

वचोऽशब्दसंज्ञायाम् (७. ३. ६७)

वचेः शब्दसंज्ञातोऽन्यत्र कुत्वं न । वाच्योऽर्थः । शब्दनाम्नि तु वाक्यम् । सत्रांशभूतस्य दशरात्रस्य दशमेऽहनि वाच्ये वचेः कुत्वमिष्टम् । नास्मिन् केनचित् कस्यचिद् विवक्तव्यमित्यविवाक्यम् अहः ।

प्रयोज्यनियोज्यौ शक्यार्थे (७. ३. ६८)

अन्यत्र प्रयोग्यम् । नियोग्यम् ।

---

स्थानिनिमित्तयोर्यथासंख्यं नेत्याह—रेक्यम्, योग्यम् इति ॥ अजेर्व्यघञपोः । आर्धधातुके इति विषयसप्तमी न परसप्तमीत्याह — आर्धधातुके कर्तव्य इति । तेनादेशेषु कृतेषु पश्चाद् यथाप्राप्तं प्रत्ययः स्यात् ॥ यजयाचरुचप्रवच-

---

१. 'त्ययमादे' घ. पाठः. २. 'म् ऋ' क. ख. पाठः.

## भोज्यं भक्ष्ये (७. ३. ६९)

भोज्या यवागूः । अन्यत्र भोग्यं सुखम् ।

## अचो यत् (३. १. ९७)

अजन्ताद् धातोर्यत् स्यात् । गुणः । चेयम् । जेयम् । णीञ् प्रापणे ।

## णो नः (६. १. ६५)

धात्वादेर्णस्य नः स्यात् । नेयम् । ण्यन्तानामजन्तत्वाद्भ्यो यत् । णिचो णचयोर्लुप्तयोरिकारमात्रमस्ति । चोरि य ।

## णेरनिटि (६. ४. ५१)

अनिट्यार्धधातुके परे णेर्लोपः स्यात् । चोर्यम् । इटि तु णेर्लोपाभावाद् गुणायादेशौ । चोरयितव्यम् । 'णेरनिटी'त्यत्र 'क्यस्य विभाषा' (६-४-५०) इत्यतो विभाषानुवृत्त्या गणयतेर्यति णिलोपो वेत्याहुः । गणि य । गुणे कृते गणेयम् । णिलोपे गण्यम् ।

## ईद् यति (६. ४. ६५)

आदन्तस्याङ्गस्य यति परे ईकारोऽन्तादेशः स्यात् । गुणः । पेयम् । धेयम् ।

## ओरावश्यके (३. १. १२५)

उवर्णान्तादावश्यकेऽर्थे ण्यदेव । वृद्धौ 'धातोस्तन्निमित्तस्य' (६-१-८०)इत्यावादेशः । श्राव्यो वेदः । लाव्यो रिपुः । अन्यत्र यत् । श्रव्यम् । लव्यम् ।

---

चेश्च । प्रवाच्यं नाम ग्रन्थविशेषः । अर्च्यमिति । ऋदुपधत्वेऽप्यस्मादेव ज्ञापकाद् ण्यत् ॥ णेरनिटि । यथासम्भवमियङ्यण्गुणवृद्धिदीर्घाणामपवादः । वेत्याहुरिति । अन्ये त्वौणादिके(न) यप्रत्ययेन गणेयसिद्धिं ब्रुवते ॥ ओरावश्यके । यतोऽपवादः । अवश्यं भाव आवश्यकम् । मनोज्ञादित्वाद् वुञ् । अत्र-

---

१. 'गूः । भो', २. 'त्वादिका' घ. पाठः. ३. 'स्य' ख. ग. पाठः. ४. 'न्ताङ्ग' घ. पाठः.

## पोरदुपधात् (३. १. ९८)

पवर्गान्ताददुपधाद् धातोर्यत् स्यात् । शप्यम् । लभ्यम् । नभ्यम् ।

## आङो यि (७.१.६५)

आङ्पूर्वाल्लभेर्यादौ प्रत्यये कर्तव्ये नुमागमः स्यात् ।

## मिदचोऽन्त्यात् परः (१.१.४७)

मिदन्त्यादचः परः स्यात् । नुमो नकारमात्रमस्ति । तस्यानुस्वारपरसवर्णौ । आलम्भ् । एवं सत्यदुपधत्वाभावाद्यदभावे ण्यत् । आलम्भ्यः पशुः । ण्यद्यतोः स्वरे भेदः ।

## उपात् प्रशंसायाम् (७. १. ६६)

उपाल्लभेः प्रशंसायां द्योत्यायां नुम् स्यात् ।

"उपलम्भ्यं त्वया राज्यमिति कर्तृस्तुतिः क्वचित् ।
सद्भिरेवोपलम्भ्योऽज इति कर्मस्तुतिः क्वचित् ॥
लाभो ज्ञानं च धात्वर्थः प्रशंसा द्योत्यते परम् ।
उपलम्भ्यः प्रशंसार्ह इत्येवाचष्ट शङ्करः ॥"

अप्रशस्ते तूपलभ्यः ।

## आसुयुवपिरपिलपित्रपिचमश्च (३. १. १२६)

आङ्पूर्वात् सुनोतेर्य्वादिभ्यश्च यति प्राप्ते ण्यदेव स्यात् । आसाव्यम् । यु मिश्रणे । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । त्राप्यम् । आचाम्यं जलम् । आचान्तिरेवाचाम्यमिति शङ्करः । एवमालाप्यमा-

---

यानां भमात्रे टिलोपः । आवश्यकेऽर्थे इति । द्योत्य इति यावत् । क्वचित् तु द्योतितार्थस्यापि प्रयोगो दृश्यते लाघवं प्रत्यनादरात् । अवश्यलाभ्यम् । अत्रोपपदसमासासम्भवेऽपि मयूरव्यंसकादित्वात् समासः ॥ **पोरदुपधात्** । ण्यतोऽपवादः । **स्वरे भेद** इति । ण्यति सति तित् स्वरितम् । य(दि ? ति) तु यतोऽनाव इत्याद्युदात्तत्वम् ॥ **आसुयुवपिरपिलपित्रपिचमश्च** । **सुनोतेरिति** । सु

---

१. 'देव । आ', २. 'मागमः स्या' घ. पाठः.

लापः । चकाराद् दाम्यः । दभिः सौत्रो धातुः वञ्चने हिंसायां च । गमजपयजभजनमां यद्वेति कौमुदी । पक्षे ण्यत् । गम्यम् । गाम्यम् । जप्यम् । जाप्यम् । यज्यम् । याज्यम् । भज्यम् । ण्यति कुत्वे भाग्यम् । आनम्यम् । आनाम्यम् । 'तकिशसिचतियतिजनीनां यद् वाच्यः' (वा० ३-१-९७) तक हसने । शसिर्हिंसार्थः । चतिर्याचने । तक्यम् । शस्यम् । चत्यम् । प्रयत्यम् । जन्यम् । 'हनो वा वध च' (वा० ३-१-९७) । हनेर्यद्वधादेशौ वा स्तः । वध्यः । वेत्युक्तेर्ण्यति घात्यः ।

**शकिसहोश्च (३. १. ९९)**

अनयोर्यत् । शक्यः । षह मर्षणे ।

**धात्वादेः षः सः (६. १. ६४)**

सह्यः ।

**गदमदचरयमश्चानुपसर्गे (३. १. १००)**

अनुपसर्गेभ्यो गदादिभ्यो यत् स्यात् । गद्यम् । मद्यम् । चर्यम् । यम्यम् । उपसर्गे तु, प्रगाद्यमित्यादि, ण्यत् । कृत्यानां बहुलत्वान्नियम्यम् । 'चरेराङ्पूर्वादगुरौ' (वा० ३-१-१००) आचर्यं कर्म । गुरौ त्वाचार्यः ।

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु (३. १. १०१)**

एते यदन्ताः क्रमाद् निपात्यन्ते । अवद्यं गर्ह्यम् । गर्ह्यादन्यत्र

---

इत्यनेन 'षुञ् अभिषवे' इत्ययं धातुर्गृह्यते । न तु 'षु प्रसवैश्वर्ययोरि'त्ययमिति भावः । यु मिश्रणे इति । सानुबन्धकत्वाद् 'युञ् बन्धने' इत्यस्याग्रहणम् । शसिर्हिंसार्थ इति । यत्तु केचित् शंसिं सानुस्वारं पठन्ति । तन्न । 'ईडवन्दवृशंसदुहां ण्य(न्त ? तः')' इति सूत्रविरोधात् ॥ **गदमदचरयमश्चानुपसर्गे** । अनुपसर्गे इति पञ्चम्यर्थे सप्तमीत्याह — **अनुपसर्गेभ्य इति** । यमेः 'पोरदुपधाद्' इत्येव यति सिद्धे अनुपसर्गादेव यथा स्यात्, सोपसर्गान्मा भूदित्येवं नियमार्थं ग्रहणम् । यद्येवं 'त्वया नियम्या ननु दिव्यचक्षुषे'त्यादयः प्रयोगाः कथमित्याह — **कृत्यानां बहुलत्वादिति** । 'तत्र भवेद् विनियम्यम्' इति वार्त्तिकप्रयोगोऽत्र ज्ञापकः । **चरेराङ्पूर्वादिति** । सोपसर्गार्थं आरम्भः ॥ **अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु** । **निपात्यन्त इति** । वदेर्नञ्युपपदे

वक्ष्यमाणे क्यप्यनुद्यं रहस्यम् । पण्यं विक्रेतव्यम् । वर्येत्यनिरोधे द्योत्ये स्त्रियामेव ।

"तातानिरोधलभ्यत्वात् स्वयंवरगता वधूः ।
वर्या स्यादस्त्रियां चाह भट्टिर्वर्यस्त्वया सुहृत् ॥"

वह्यं करणम् (३. १. १०२)

वह्यमिति वहनसाधनम् । वाह्यमन्यत् ।

अर्यः स्वामिवैश्ययोः (३. १. १०३)

आर्योऽन्यः ।

उपसर्या काल्या प्रजने (३. १. १०४)

गर्भग्रहणे प्राप्तकाला गवादिरुपसर्या ।

अजर्यं सङ्गतम् (३. १. १०५)

सङ्गतं सङ्गमः । तद्विशेषणत्वेऽजर्यमिति कर्तरि स्यात् । अजर्यं सत्सङ्गतम् ।

---

'वदः सुपी'ति यत्क्यपोः प्राप्तयोर्यदेव, सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम् । **पण्यं विक्रेतव्यमिति** । पणितव्यशब्दस्य विक्रेतव्यस्तोतव्यरूपार्थद्वयसाधारणत्वेऽपि पण्यशब्दस्य विक्रेतव्य एव रूढत्वात् तदर्थं निपातनम् । उक्तं च—

"धातुसाधनकालानां प्राप्त्यर्थं नियमस्य वा ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥"

इति । स्तुत्यर्थे तु पाण्यमित्येव । **स्त्रियामेवेति** । इह सूत्रे अवद्यादीनि निर्विभक्तिकानि, न तु द्वन्द्वः । तेन वर्येति स्त्रियामेव निपात्यत इत्याशयः ॥ **वर्या स्यादिति** । 'वृङ् संभक्तौ' । अस्येदं निपातनम् । वृत्या अन्या । 'एतिस्तु' इत्यादिना क्यप् । **अस्त्रियां चाह भट्टिरिति** । द्वन्द्वाज्जसा निर्देश इति तन्मतम् ॥ **उपसर्या काल्या प्रजने** । कालः प्राप्तोऽस्याः काल्या । समयस्तदस्य प्राप्तमिति वर्तमाने कालाद् यत् । प्रजनं प्रजनः । भावे घञ् । 'जनिवध्योश्चे'ति वृद्धिप्रतिषेधः । अनयोर्व्याख्यानं **गर्भग्रहणे प्राप्तकालेति** । गर्भाधानार्थं वृषादिनोपगन्तुं योग्येत्यर्थः ॥ **अजर्यं सङ्गतम्** । **सङ्गम इति** । अनेन सूत्रे(ण) 'नपुंसके भावे क्तः' इति दर्शितः । **कर्तरि स्यादिति** । 'तयोरेवे'ति भावे मा भूत् कर्तर्येव यथा स्यादित्येतदर्थमेव निपातनाश्रयणमिति भावः । भावे तु सङ्गतकर्तृकेऽपि ण्यदेव । अजार्यं(सं) गतेनेति । 'मृगे-

वदः सुपि क्यप् च (३. १. १०६)

वदेरनुपसर्गे सुबन्ते उपपदे क्यप् च यच्च स्यात् । तत्र यति, व्यासेनोच्यमानो व्यासवद्यो धर्मः । अत्र व्यासशब्दस्य तृतीयार्थयोगात् व्यास टा वद्य इति स्थिते

उपपदमतिङ् (२. २. १९)

क्रियापदादन्यदुपपदं समर्थेन सह समस्यते । स च समासस्तत्पुरुषसंज्ञः । समासत्वेन प्रातिपदिकत्वे

सुपो धातुप्रातिपदिकयोः (२. ४. ७१)

एतयोरंशस्य सुपो लुक् स्यात् । इति समासस्थविभक्तिलोपः व्यासवद्यः । क्यपि तु पः स्वराद्यर्थः ।

लशक्वतद्धिते (१. ३. ८)

अतद्धिते प्रत्यय आदिभूता लकारशकारकवर्गा इत्संज्ञाः । वद् य ।

---

रजयं जरसोपदिष्टमदेहवन्धाय पुनर्बबन्धे'ति कालिदासप्रयोगे सङ्गतमिति विशेष्यं द्रष्टव्यम् ॥ वदः सुपि क्यप् च । गदमदेति सूत्रादनुपसर्ग इत्यनुवर्तते इत्याह— अनुपसर्गे सुबन्त इति ॥ उपपदमतिङ् । 'नित्यं क्रीडाजीविकयो'रित्यतो नित्यमितीहानुवर्तते । अतिङित्युपपदविशेषणतया वृत्त्यादौ योजितम् । तदनुसारेणाह— क्रियापदादन्यद् उपपदमिति । अतिङिति किम् । एधानाहारको व्रजति । 'तुमुन्ण्वुलौ क्रियायाम्' इति सप्तमीनिर्दिष्टत्वाद् आहरणक्रियार्थाया व्रजिक्रियाया उपपदत्वम् । भाष्ये तु 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इति सूत्रे अतिङित्यस्य समासविशेषणत्वं दर्शितम् । अतिङन्तश्च समासो भवति । उपपदं तिङन्तेन न समस्यत इत्यर्थः । अस्मिन् पक्षे मा भवान् भूदिति प्रत्युदाहरणम् । 'माङि लुङि'ति माङः उपपदत्वम् । अयमेव पक्षः शब्दकौस्तुभे स्थापितः । पः स्वराद्यर्थ इति । आदिशब्देन (इत्यः) इत्यादौ तुगपि प्रयोजनमित्युक्तम् ॥ वचिस्वपियजादीनां किति ।

## वचिस्वपियजादीनां किति (६. १. १५)

वचिस्वप्योर्यजादीनां च किति परे सम्प्रसारणं स्यात् । यणः स्थाने इक् स्यादित्यर्थः ।

"यजो वपो वहश्चैव वेञ्व्येञौ ह्वयतिस्तथा ।
वदवसौ श्वयतिश्चैव स्मृता नव यजादयः ॥"

इति वदेर्वकारस्योत्वं, उ-अ-द्य ।

## सम्प्रसारणाच्च (६. १. १०८)

सम्प्रसारणादचि परे द्वयोः सह पूर्वरूपं स्यात् । उद्य । प्राग्वदुपपदसमासः । आद्गुणः । व्याखोद्यः । कृत्यानां बहुलत्वात् कर्तरि भावेऽप्याहुः । सत्यवद्यः सत्योद्यो वा मुनिः । अनृतोक्तिरेवानृतवद्यमनृतोद्यं च । भावः क्रियास्वरूपम् ।

## भुवो भावे (३. १. १०७)

अनुपसर्गे सुबन्त उपपदे भूधातोर्भावेऽर्थे क्यप् स्यात् । गुणे प्राप्ते ।

## क्ङिति च (१. १. ५)

इक इति प्राप्ते गुणवृद्धी किति ङिति च निमित्त न स्तः । देवभूयम् ।

---

'वच परिभाषणे' । ब्रुवो वचिश्च । 'ञिष्वप् शये' । 'यज देवपूजादौ' । श्लोके अनुबन्धविशिष्टो धातुरनुकृतः । एवमुत्तरत्रापि । 'डु वप् बीजसन्ताने' । 'वह प्रापणे' 'वेञ् तन्तुसन्ताने' । 'व्येञ् संवरणे' 'ह्वेञ् स्पर्धायां शब्दे च' । 'वद व्यक्तायां वाचि' । 'वस निवासे' । 'टुओश्वि गतिवृद्ध्योः' ॥ भावः क्रियास्वरूपमिति । क्रियालक्षणं तु—

"यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥"

इति । माधवश्चाह—भावस्तु केवलो धात्वर्थ इति ॥ भुवो भावे । पूर्वसूत्रे

हनस्त च (३. १. १०८)

हनेरनुपसर्गे सुप्युपपदे क्यप् स्यात्, तश्चान्तादेशः। ब्रह्मन् हत्य। अत्र ब्रह्मञ्छब्दस्य समासस्थसुब्लोपेऽपि, 'प्रत्ययलोपे प्रत्ययलक्षणम्' (१-१-६२) इति सुबन्तत्वेन पदत्वे

न लोपः प्रातिपदिकान्तस्य (८. २. ७)

पदसंज्ञस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्य लोपः स्यात्। ब्रह्महत्य। स्वभावात् स्त्रीत्वेन टाप्। ब्रह्महत्या।

एतिस्तुशास्वृदृजुषः क्यप् (३. १. १०९)

इणादिभ्यः क्यप् स्यात्।

ह्रस्वस्य पिति कृति तुक् (६. १. ७१)

पिति कृति परे ह्स्वान्तस्य धातोस्तुक् स्यात्। इत्यः।

"ईगताविति धातोर्यत् तस्मादेयमिति स्थितेः।
'एङी'ति पररूपे स्यादुपेयमिति नत्विणः॥"

स्तुत्यः। शास् य।

शास इदङ्हलोः (६. ४. ३४)

अङि हलादौ क्ङिति च परे 'शासु अनुशिष्टावि'त्यस्योपधाया इत् स्यात्। शिस् य।

शासिवसिघसीनां च (८. ३. ६०)

एषामिण्कवर्गाभ्यां परस्य सस्य षः स्यात्। शिष्यः। शास्य इति तु हिंसार्थाच्छासयतेः। वृ इति वरणार्थस्यैव ग्रहः। वृत्यः। वृङस्तु वार्यः। आदृत्यः। जुष्यः। क्यबधिकारे पुनः क्यब्ग्रहणम् 'ओरावश्यके' (३-१-१२५) इति ण्यद्बाधेनाप्यवश्यस्तुत्यमिति क्यप्सिद्ध्यर्थम्। 'शंसिदुहिगुहिभ्यः क्यब्वेति वाच्यम्' (वा० ३-१-१०९)। 'शंसु स्तुतौ'।

---

चकारेणानुकृष्टत्वाद् यदिति नानुवर्तत इत्याह — क्यप् स्यादिति। अनुपसर्गे सुबन्त उपपद इत्युक्तेः प्रभव्यम्, भव्यामित्यत्र न॥ न लोपः प्रातिपदिकान्तस्य। नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। तयोः सापेक्षत्वेनासमर्थत्वात् समासाप्रवृत्तेः॥ एतिस्तुशास्वृदृजुषः क्यप्। इणादिभ्य इति। सुप्यनुपसर्गे भाव इत्येतत् सर्वं निवृत्तमिति भावः। शिष्य इति। आङः शासु

---

१. 'पं' क. पाठः.

## अनिदितां हल उपधायाः क्ङिति (६. ४. २४)

अनिदितां हलन्तानामङ्गानां किति ङिति च परे उपधाया नस्य लोपः स्यात् । शस्यम् । ण्यति नस्यानुस्वारः । शंस्यम् । क्यप्यगुणः । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । आङ्यञ्जेः संज्ञायाम् (वा० ३-१-१०९) क्यप् स्यात् । अन् ज् इति नोपधत्वात् प्राग्वन्नलोपः । बहुलोक्तेः करणे । अञ्जनसाधनमाज्यम् ।

## ऋदुपधाच्चाक्लृपिचृतेः (३. १. ११०)

क्लृपिचृतिवर्जितादृदुपधाद् धातोः क्यप् स्यात् । कृष्यम् । दृश्यम् । क्लृपिचृत्योस्तु ण्यत् । कल्प्यम् । 'चृती' हिंसाग्रन्थनमोचनेषु । चर्त्यम् । ऋचेः ऋदुपधत्वेऽपि ण्यति कुत्वनिषेधाद् ण्यदेव ज्ञापितः । 'पाणौ सृजेर्ण्यद्वाच्यः' (वा० ३-१-१२४) पाणिना कार्या पाणिसर्ग्या रज्जुः । समवपूर्वाच्च (वा० ३-१-१२४) समवसर्ग्यः । अन्यत्र सृज्यम् ।

## ई च खनः (३. १. १११)

खनेः क्यब् ई चान्तादेशः । आद्गुणः । खेयम् ।

## भृञोऽसंज्ञायाम् (३. १. ११२)

क्यप् स्यात् । भरणीयो भृत्यः । नाम्नि तु भार्या पत्नी ।

---

इच्छायामित्यस्यापि ग्रह इति हरः । आशास्यः । स्वरे विशेषः । वृङस्त्विति । 'ईड वन्दे'ति ज्ञापकात् । तत्र ह्यात्मनेपदिभ्यां साहचर्यादात्मनेपदिनो वृङ एव ग्रहणमिति भावः ॥ ऋदुपधाच्चाक्लृपिचृतेः । कुत्वनिषेधादिति । 'यजयाचरुचप्रवचर्चश्चे'ति सूत्र इति ज्ञेयम् । ऋदिति तपरकरणं किम् । कॄत संशब्दने । अनित्यण्यन्ताश्चुरादय इति णिजभावपक्षे कीर्त्यम् । णिजन्तात्तु यदेव ॥ भृञोऽसंज्ञायाम् । भरणीयो भृत्य इति । एतेन क्रियाशब्दोऽयं न संज्ञेति दर्शितम् । नाम्नि तु भार्येति । इदं माधवीयं प्रत्युदाहरणम् । अन्ये तु भार्या नाम क्षत्रिया इति प्रत्युदाहरन्ति । भार्याशब्दे तु संज्ञात्वेनास्मिन् क्यपि प्रतिषिद्धेऽपि 'संज्ञायां समजनिषद'त्युक्तस्य क्यपः प्रसङ्गो दुर्वारः । अत्रत्येन निषेधेन तु स न निवार्यते पुल्लिङ्गे चरितार्थत्वात् । अतो 'भॄ भरणे' इति दीर्घान्तात् ण्यति भार्येति चाहुः । भार्येति प्रत्युदाहरतस्त्वयमाशयः । 'संज्ञायां समजे'ति

'सम्पूर्वाद्वा' (वा० ३-१-११२) । सम्भृत्यम् । सम्भार्यम् ।

**मृजेर्विभाषा (३. १. ११३)**

मृजेः क्यब्वा स्यात् । मृज्यम् । ण्यति तु

**मृजेर्वृद्धिः (७. २. ११४)**

मृजेः प्रत्यये परे इको वृद्धिः स्यात् । कुत्वं मार्ग्यम् ।

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः (३. १. ११४)**

राज्ञा सोतव्यो राजसूयः क्रतुः । सरतीति सूर्यः । मृषोद्यमिति नित्यं क्यब् निपात्यते । रोचत इति रुच्यः । मणिहेमादिभ्योऽन्यद्वस्त्रादि धनं बह्वपायेभ्यो गोप्यत्वात् कुप्यम् । कृष्टे स्वयं पच्यमानः कृष्टपच्यः । न व्यथत इत्यव्यथ्यः ।

**भिद्योद्ध्यौ नदे (३. १. ११५)**

कूलं भिन्दन् भेद्यः । उदकमुज्झन्नुद्ध्यः ।

**पुष्यसिध्यौ नक्षत्रे (३. १. ११६)**

---

क्यब् भाव एव । भार्येत्यत्र तु कर्मणि प्रत्यय इति । संपूर्वाद् वेति । असंज्ञायां नित्ये क्यपि प्राप्ते विकल्पार्थं वचनम् ॥ **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** । **सोतव्य** इति । अभिषवद्वारा निष्पाद्य इत्यर्थः । राजसूयशब्दोऽर्धर्चादिः । निपातनस्य रूढ्यर्थत्वादश्वमेधादौ नातिप्रसङ्गः । **सूर्य** इति । अत्र कर्तरि क्यप् उत्वं च निपात्यते । रपरत्वाद् हलि चेति दीर्घः । **नित्यमिति** । 'वदः सुपि क्यप् चे'ति पक्षे यति प्राप्ते तद्बाधनार्थं निपातनमिति भावः । विशेष्यनिघ्नश्च मृषोद्यशब्दः । 'उच्छ्रायसौन्दर्यगुणा मृषोद्या' इति माघः । रुच्य इत्यत्र कर्तरि क्यब् निपात्यत इत्याह — **रोचत** इति । **कुप्यमिति** । अत्र गुपेः कर्मणि क्यब् आदेः कत्वं च निपात्यते । **कृष्टपच्ये**ति । कर्मकर्तरि क्यब् निपात्यत इत्याह — **स्वयं पच्यमान** इति । शुद्धे तु कर्मणि कृष्टपाक्य इत्येव । अव्यथ्य इति कर्तरि निपातनमिति दर्शयति — **व्यथत** इति ॥ **भिद्योद्ध्यौ नदे** । भिदेरुज्झेश्च कर्तरि क्यब् निपात्यत इति दर्शयन्नाह — **भिन्दन् उज्झन्निति** । उज्झेस्तु धत्वं च निपातनात् ॥ **पुष्यसिध्यौ**

अर्थाः पुष्यन्ति सिध्यन्ति[1] चास्मिन्नित्येवमुच्यते[2] ।
शोभते कार्यमत्रेति त्विषेः स्यात् तिष्य इत्यपि ॥

विपूयविनीयजित्या मुञ्जकल्कहलिषु (३. १. ११७)

विपूयो मुञ्जाख्यः । विनीयं पापं पिष्टं वा । महद्धलं हलिः । तेनात्र कृष्टसमीकरणार्थं दारु जित्य इति हरः ।

प्रत्यपिभ्यां ग्रहेश्छन्दसि (३. १. ११८)

इति क्यप् । भाषायां वेति केचिदिति कौमुदी ।

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च (६. १. १६)

एषां किति ङिति च परे संप्रसारणं स्यात् । प्रतिगृह्यम् । ण्यति प्रतिग्राह्यम् । अपिगृह्यम् । अपिग्राह्यम् । अपिग्रहणमाच्छादनम् ।

पदास्वैरिबाह्यापक्ष्येषु च (३. १. ११९)

एषु[3] च वाच्येषु ग्रहेः क्यप् स्यात् । प्रगृह्यमवगृह्यं[4] च पदम् । गृहीतत्वाद् अस्वैरी गृह्यः शुकः । पुराद् बाह्या पुरगृह्या भूः । स्त्रियामेवैतत् । पक्ष्ये रिपुगृह्योऽयम् ।

---

नक्षत्रे । अर्था इति । आरब्धा इति शेषः । अत्राधिकरणे क्यब् निपात्यत इति द्योतयति— अस्मिन्निति ॥ विपूयविनीयजित्या मुञ्जकल्कहलिषु । पूञ्णीञ्जिभ्यः कर्माणि क्यब् निपात्यते । विपूयो मुञ्जाख्य इति । रज्ज्वादिकरणाय मुञ्जस्य शोधयितव्यत्वादित्यर्थः । पापमिति । 'कल्कः पापाशये पापे' इत्यभिधानात् । पिष्टं वेति । तैले घृते वा औषधपक्के पूते यदजीर्षं तत् पिष्टमिति हरः । अन्यत्तु विपव्यं, विनेयं, जेयं च ॥ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । 'ग्रह उपादाने', 'ज्या वयोहानौ', 'वेञो वयिः', 'व्यध ताडने', 'वश कान्तौ', 'व्यच व्याजीकरणे', 'ओव्रश्चू छेदने', 'प्रच्छ ज्ञीप्सायाम्', 'भ्रस्ज पाके' ॥ पदास्वैरिबाह्यापक्ष्येषु च । प्रगृह्यमवगृह्यं च पदमिति । असन्निकर्षोऽत्र गृह्णातेरर्थः । यत्रावान्तरपदसंज्ञां

---

१. 'ति' ख. पाठः. २. 'त्वि' ग. पाठः. ३. 'षु वा' क. ख. पाठः. ४. 'प्र' ग. पाठः.

## विभाषा कृवृषोः (३. १. १२०)

अनयोः क्यब् वा स्यात् । कृत्यम् । ण्यति कार्यम् । वृष्यम् । वर्ष्यम् ।

## युग्यं च पत्रे (३. १. १२१)

पत्रं वाहनम् । युग्योऽश्वः ।

## चित्याग्निचित्ये च (३. १. १३२)

एते च निपात्येते । चीयत इति चित्योऽग्निः । अग्निचयनमेवाग्निचित्या ।

---

अथ ण्यदन्ताः ।

## अमावस्यदन्यतरस्याम् (३. १. १२२)

अत्र ण्यति वा वृद्ध्यभावो निपात्यते । तः स्वरार्थः । सह वसतोऽस्यां सूर्येन्दू इत्यमावस्या अमावास्या ।

---

सूचयितुं पदपाठकाले किञ्चित्कालमवसानं तत् पदमवगृह्यम् । हरी इमावित्यादौ यत्र प्रकृतिभावाद् यणाद्यभावे (अणाद्यभावे ?) अचोः परस्परमसन्निकर्षस्तत् प्रगृह्यम् । **रिपुगृह्य** इति । तत्पक्षाश्रित इत्यर्थः । पक्षे भवः पक्ष्यः । दिगादित्वाद् यत् ॥ **युग्यं च पत्रे** । युजेः क्यप् कुत्वं च निपात्यते । **युग्योऽश्व** इति । 'तद्वहति रथयुगप्रासङ्गमि'ति तद्धितेन सिद्धावपि ण्यद्बाधनार्थमिदम् । अन्यथा हि योग्यो गौरिति स्यात् ॥ **चित्याग्निचित्ये च** । चिनोतेः कर्मणि क्यब् निपात्यत इति दर्शयति — **चीयत** इति । यतोऽपवादः । **अग्निचयन**मिति । एतेन भाव( य ? इ)ति दर्शितम् । अत्र (या ? यका)रप्रत्ययस्तुक् च निपात्यते । क्यपि तु स्वरे दोषः स्यात् । इह पूर्वसूत्रादग्नावित्यनुवर्तते । तच्च चित्यशब्दस्यैव विशेषणम् । द्वितीयस्य तस्य भावार्थकत्वेनाग्निवाचकत्वासम्भवात् । अग्नेरन्यत्र तु चेयमित्येव ॥

**अमावस्यदन्यतरस्याम्** । **वृद्ध्यभाव** इति । तेन 'अमावास्याया वे'ति विहितस्तद्धितो वृद्ध्यभावपक्षेऽपि एकदेशविकृतमनन्यवदिति न्यायात् सिद्ध्यति । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमाश्रीयते, तदा ण्यदन्तमनूद्य विहित-

## आनाय्योऽनित्ये (३. १. १२७)

सायंप्रातर्गार्हपत्यादानीयोत्पादने सति ।
दक्षिणाग्निरनित्यत्वादानाय्य इति कथ्यते ॥

## प्रणाय्योऽसम्मतौ (३. १. १२८)

असम्मान्यो निष्कामश्चासम्मतिः । तेन प्रणाय्यो दुष्टः । प्रणाय्यो यतिः । अन्यत्र यत् । प्रणेयः । अत्र हि निपातानामपि पदत्वार्थं सुविभक्तिरस्तीति प्र सु नेय इति स्थिते

## कुगतिप्रादयः (२. २. १८)

कुशब्दो गतिसंज्ञाः प्रादयश्च समर्थेन सह समस्यन्ते स च समासस्तत्पुरुषसंज्ञः । इति समासे सुलुक् । प्रनेयः ।

## उपसर्गादसमासेऽपि णोपदेशस्य (८. ४. १४)

उपसर्गस्थरेफात् परस्य णोपदेशस्य धातोर्नस्य समासेऽप्यसमासेऽपि णत्वं स्यात् । प्रणेयः । असमासे तु तिङन्ते प्रणयतीति ।

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु [(३. १. १२९)

पाय्यं मानसाधनम् । सान्नाय्यं दधिरूपं हविः । निकाय्यो गृहम् ।

---

स्तद्धितो यदन्ता(न्यः ? न्न) स्यात् । अमेति सहार्थमव्ययम् । अधिकरणे चात्र ण्यदिति दर्शयति—सह वसतोऽस्यामिति ॥ आनाय्योऽनित्ये । आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते । रूढ्यर्थं निपातनमित्याह—दक्षिणाग्निरिति । दक्षिणाग्नावपि विशिष्ट एवेष्यते न सर्वत्रेति दर्शयति — सायंप्रातरित्यादिना । अन्यत्रानेय इत्येव ॥ प्रणाय्योऽसम्मतौ । न विद्यते जनानां सम्मतिः सम्मानमस्मिन्नित्यसम्मतिः दुष्टः । न विद्यते विषयेषु सम्मतिरादरोऽस्येत्यसम्मतिर्यतिः । तन्त्रेणार्थद्वयमपीह विवक्षितमित्याह — असम्मान्यो निष्कामश्चेति ॥ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ पाय्यं मानसाधनमिति । मीयतेऽनेनेति माङः करणे ण्यत्

सामिधेन्यभिधास्वृक्षु काचिद् धाय्येति कथ्यते ।
शस्त्रादिष्वपि धाय्यास्ति तेनैतदुपलक्षणम् ॥

**क्रतौ कुण्डपाय्यसञ्चाय्यौ (३. १. १३०)**

आद्यो यदन्तः ।

**अग्नौ परिचाय्योपचाय्यसमूह्याः (३. १. १३१)**

एतेऽग्निचयनभेदाः । 'वसेस्तव्यत् कर्तरि णिच्च' (वा० ३-१-९६) । णित्त्वाद् वृद्धिः । व्रजे वास्तव्यो हरिः । कर्मकर्तरि 'केलिमर उपसङ्ख्यानम्' (वा०३-१-९६) । कित्त्वादगुणः । स्वयं भिद्यन्त इत्याद्यर्थे

भिदेलिमानि काष्ठानि शालयोऽर्मा पचेलिमाः ।
छिदेलिमा जीर्णरज्जुस्तृणजालं दहेलिमम् ॥

एष कर्मण्येवेति भाष्ये । पचेलिमस्त्वया तण्डुलः । पक्तव्य इत्यर्थः ।

इति कृत्यप्रत्ययाः ॥

---

आदेः पत्वं च निपात्यते । 'आतो युगि'ति युक् । सान्नाय्यमिति । सम्यङ् नीयते होमार्थमग्निं प्रतीति नयतेः कर्मणि ण्यदायादेशः समो दीर्घश्च निपात्यते । दधिरूपमिति । माघस्तु 'हुतमयमवलीढे साधु सान्नाय्यमग्निरि'ति हविर्मात्रे प्रायुङ्क्त । निकाय्य इति । निचीयतेऽस्मिन् धान्यादिकमिति चिनोतेरधिकरणे ण्यदादिकत्वमायादेशश्च निपात्यते । धाय्येति । धीयतेऽनया समिदिति धाञः करणे ण्यन्निपात्यते । पूर्ववद् युक् । काचिदिति । सप्तदशसु सामिधेनीषु द्वादशी ऋगित्यर्थः ॥ क्रतौ कुण्डपाय्यसञ्चाय्यौ । यदन्त इति । कुण्डेन पीयतेऽस्मिन् सोम इति पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । न तु ण्यत् । तित्स्वरप्रसङ्गादित्यर्थः । सम्पूर्वाच्चिनोतेस्तु ण्यदायादेशौ निपात्येते ॥ अग्नौ परिचाय्योपचाय्यसमूह्याः । अग्निशब्देनेह न ज्वलनः, किन्तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं गृह्यत इत्याह — अग्निचयनभेदा इति । परिपूर्वादुपपूर्वाच्च चिनोतेर्ण्यदायादेशौ । सम्पूर्वस्य वहेस्तु सम्प्रसारणं दीर्घश्च निपात्यते । अन्यत्र तु परिचेयमुपचेयं संवाह्यम् ॥ वसेस्तव्यत् कर्तरि णिच्च । 'वस निवासे' इत्यस्य ग्रहणम् । न तु 'वस आच्छादने' इत्यस्य लुग्विकरणस्य । तयोरेव कृत्यक्तखलर्थाः इति वचनात् कर्तरि न प्राप्नोतीति वचनं णिद्वद्भावार्थं च । केलिमर इति । रेफः स्वरार्थः ॥

इति कृत्यप्रत्ययाः ॥

---

१. 'शा' ग. छ. पाठः.

अथ कर्त्रर्थो एव कृतः —

## ण्वुल्तृचौ (३. १. १३३)

सर्वधातुभ्यः कर्तर्येतौ स्तः । ण्वुलो लः स्वरार्थः । णो वृद्ध्यर्थः ।

## युवोरनाकौ (७. १. १)

यु वु इत्येतयोः क्रमाद् अन अक इत्यादेशौ स्तः । 'अचो ञ्णिति' (७-२-११५) इति वृद्धिः । भावकः । कारकः । 'अत उपधायाः' (७-२-११६) इति वृद्धिः । पाचकः ।

## नोदात्तोपदेशस्य मान्तस्यानाचमेः (७. ३. ३४)

धातुपाठे उदात्ततयोक्तस्य मान्तस्याचमिवर्जितस्य धातोश्चिणि ञ्णिति कृति च परे वृद्धिर्न स्यात् । शमकः । दमकः । मान्तेषु यमिरमिनमिगमयोऽनुदात्ताः । तेषां वृद्धिः स्यादेव । यामक इत्यादि । यमकमिति यमशब्दात् । गमकश्च गमयतेरेव । अनाचमेरित्यत्र 'अवमिकम्याचमीनामि'ति वाच्यम् । (वा० ७-३-३४) वामकः । कामकः । आचामकः ।

## जनिवध्योश्च (७. ३. ३५)

अनयोश्च चिणादौ वृद्धिर्न । जनकः । वधकः ।

## आतो युक्चिण्कृतोः (७. ३. ३३)

आदन्तस्य चिणि ञ्णिति कृति च परे युक् स्यात् । पायकः । दायकः ।

## रधिजभोरचि (७. १. ६१)

अनयोरजादौ प्रत्यये परे नुम् स्यात् । 'रध हिंसापाकयोः'

---

**ण्वुल्तृचौ** । चकारस्तुरिष्ठेमेयास्स्वित्यत्र तृन्तृचोः सामान्यग्रहणाविघातार्थः । इतरथा हि 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'त्यस्यैव ग्रहणं स्यात् ॥ **युवोरनाकौ** । युश्च वुश्चेति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । यु वु इत्येतयोरिति । अनुनासिकयणोरेव यु वु इत्येतयोरेतावादेशौ स्तः । तेन ऊर्णाया

---

१. 'लकारः स्व', २. 'तेः ।' घ. पाठः.

'जभ गात्रविनामे' नस्यानुस्वारपरसवर्णौ । रन्धकः, जम्भकः । अनजादौ[1] तु न नुम् । रध्यति ।

रभेरशब्लिटोः (७. १. ६३)

शब्लिड्वर्जितेऽजादौ प्रत्यये परे रभेर्नुम् स्यात् । आरम्भकः । शब्लिटोस्तु न । आरभते । आरेभे ।

लभेश्च (७. १. ६४)

अस्यापि रभिवन्नुम् स्यात् । लम्भकः ।

अचि विभाषा (८. २. २१)

गॄधातोः अजादौ प्रत्यये परे रस्य लत्वं वा स्यात् । निगालकः निगारकः । 'कृत्यल्युटो बहुलम्'(३-३-११३) इति बहुलत्वस्य सर्वकृद्व्यापित्वात् क्वचित् कर्मणि ण्वुल् । पादादपह्रियमाणः पादहारकः । गळे चोप्यमानो[2] गळेचोपकः । अत्र समासे सुब्लुक्प्राप्तौ

हलदन्तात् सप्तम्याः संज्ञायाम् (६. ३. ९.)

हलन्താददन्ताच्च परस्याः सप्तम्याः संज्ञायामलुक् स्यात् । इति । अथ तृच् । चलोपः । वलादित्वादिट् । एधितृ । विभक्तिकार्यम् । एधिता । मुद् । लघूपधगुणः । मोदिता । 'अजेर्वीभावो वलादौ वेति वाच्यम्' (वा० २-४-५६) । अजिता वेता । अजन्तत्वान्नेट्[3] । मुर्छा मोहाद्यर्थः ।

उपधायां च (८. २. ७८)

धातोरुपधाभूतयोर्हल्परयो रेफवकारयोः परयोरिको दीर्घः स्यात् । मूर्छिता । अस्य दीर्घस्यानित्यत्वाद् मुर्छितेत्यपि माधवः । नदि ।

युस् ऊर्णायुरित्यादौ यणोऽनुनासिकत्वप्रतिज्ञाभावान्नादेशः । बहुलत्वस्य सर्वकृद्व्यापित्वादिति । कृत्यल्युट इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थमित्याशयः । उपधायां च । मुर्छितेत्यपि माधव इति । स्फूर्जेर्दीर्घो-

1. 'दौ न', 2. 'चोच्यमा' ग. ङ. पाठः. 3. 'न्तान्ने' क. ख. पाठः. 4. द्। मूमुर्च्छादौ मोहाद्यम् । उ' ग. पाठः.

इदितो नुं धातोः (७. १. ५८)

इदितो धातोर्नुं स्यात् । तृच्, इट् । नन्दिता । ग्रहि तृ,

ग्रहोऽलिटि दीर्घः (७. २. ३७)

ग्रहेः परस्येटो दीर्घः स्यात् न तु लिटि । ग्रहीता । लिटि तु जगृहिव ।

वृतो वा (७. २. ३८)

वृङ्वृञोर्ॠदन्तानां चालिटीटो वा दीर्घः स्यात् । वरिता वरीता । तॄ । तरिता तरीता । अथानिटः —

एकाच उपदेशेऽनुदात्तात् (७. २. १०)

ये धातुपाठेऽनुदात्ता एकाचः सन्ति धातवः ।
तेभ्यो वलादेरिण् न स्यात् ते चानिट्कारिकोदिताः ॥

भोजोऽप्याह — * 'अच एकाचोऽनूदॄच्छ्रिविश्रिडीङ्शीङ्युरुस्नुनुक्षुक्ष्णुवृङ्वृञः ।'

ऊदन्तादीन् विनाजन्तस्यैकाच इह नेड् भवेत् ।
याता नेता तथा कर्ता गुणः सर्वत्र दृश्यताम् ॥

ऊदॄदन्तेभ्यः श्व्यादिभ्यश्चेडेव । भविता । तरिता । श्वयिता । श्रयि-

पदेश इति चाह । पूर्वप्रतिज्ञातामिडनिड्व्यवस्थां वक्तुमुपक्रमते — अथेति ॥ **एकाच उपदेशेऽनुदात्तात्** । सूत्रे उपदेश इत्येतदुभयान्वयि । अतो धातुपाठ इत्येतदनुदात्ता इत्यनेन च योजनीयम् । तत्रानुदात्तविशेषणत्वे प्रयोजनं कर्तुं गन्तुमित्यादाविण्निषेधः । नित्स्वरेण सम्प्रत्युदात्तत्वात् । एकाज्विशेषणत्वे फलं तु (विभित्स्य ? बिभित्स)तीत्यादाविण्निषेधः । द्वित्वे कृते सम्प्रत्यनेकाच्कत्वात् । **अनिट्कारिकेति** । 'अनिट् स्वरान्तो भवती'त्येवमादिकाः । **ऊदन्तादीनिति** । ऊदन्ता भूप्रभृतयः । ॠदन्ताः (क्रुप्रत्ययः ? कॄप्रभृतयः) । श्वि । टुओ श्वि गतिवृद्ध्योः । श्रि । श्रिञ् सेवायाम् । डीङ् । डीङ् विहायसा गतौ । शीङ् । शीङ् स्वप्ने । यु । यु मिश्रणामिश्रणयोः । 'युञ् बन्धन' इत्यस्य क्र्यादेरग्रहणम् । रु । रु शब्दे, रुङ् गतौ रेषणे च द्वयोर्ग्रहणम् । स्नु । णु

* एवमादीन्युपरि वक्ष्यमाणानि सूत्राणि भोजव्याकरणे षष्ठाध्यायस्य चतुर्थपादे पठितानि ।

तेत्यादि। 'शकोऽनिदितः॥' अनिदितः शकेरिण् न स्यात्। शक्ता। शक्तिमान्। इदितः 'शकि शङ्कायामि'त्यस्य तु शङ्कितेत्येव। इदित्वान्नुम्। 'विदेरलुकः॥' लुग्विकरणतोऽन्यस्माद् विदेरिण्[1] न स्यात्।

ज्ञाने वेत्ति विचारेऽर्थे विन्ते लाभे तु विन्दति।
सत्तायां विद्यते तेषु वेत्तेरन्ये त्रयोऽनिटः॥

गुणो दस्य चर्त्वं च वेत्ता। ज्ञानार्थस्य वेदिता। वृत्त्यादिमते[2] तु लाभार्थस्यापि वेदितेत्येव। 'गोप एवास्य वेत्ते'त्यादि ज्ञाने सेट्त्वाद् विचारे साध्यम्। 'श्लिषिपुषिसिधिबुधिस्विदिमनां श्यनाम्॥' श्यन्विकरणिनामेषामिण् न। गुणष्टुत्वे श्लेष्टा। पोष्टा। सिध् तृ,

## झषस्तथोर्धोऽधः (८. २. ४०)

झषः परयोस्तकारथकारयोर्धत्वं स्यात्। धाञस्तु न। सेद्धा। एवं बोद्धा। धाञस्तु धध् तस् इति स्थिते चर्त्वेन[3] तः धत्त इत्येव। स्विदि स्वेत्ता। मन्ता। श्यनामित्युक्तेः श्लेषतिपुष्णात्यादीनां श्लेषिते-

प्रस्रवणे। नु। णु स्तुतौ। क्षु। (टु)क्षु शब्दे। क्ष्णु। क्ष्णु तेजने। वृङ्। वृङ् सम्भक्तौ। वृञ्। वृञ् वरणे। वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः। आदेशोपदेशे अनेकाच्त्वात्। अत एव तद्व्यावृत्तये अनिट्कारिकासु व्याघ्रभूतिनोक्तोऽदन्तपर्युदास इहोपेक्षितः। इदानीं हलन्तान् कान्तादिक्रमेणाह— **शकोऽनिदित** इत्यादिना॥ शक्लृ शक्तौ। शक विभाषितो मर्षणे। अस्यापि ग्रहणमित्येके। कान्त एकः। **श्यन्विकरणिनामेषामिति**। श्लिषि। श्लिष आलिङ्गने। घुषिः क्वचित् पठ्यते। कारिकादिषु च न दृश्यते। 'लुग्वा दुहे—'ति सूत्रे वृत्तौ व्यत्यघुक्षतेति प्रत्युदाहरणं दृश्यते। न्यासकारस्तु अनित्यमागमशासनमित्य(नि)ट्त्वं साधितवान्। हरदत्तपाठस्तु व्यत्यपुक्षतेति। तत्र पुषेरनिट्त्वान्न कश्चिद् यत्नः। पुषि। पुष पुष्टौ। सिधि। षिधु संराद्धौ। बुधि। बुध अवगमने। स्विदि। ञिष्विदा गात्रप्रक्षरणे। मन। मन ज्ञाने। **श्लेषतीति**। श्लिषु दाहे भौवादिकः। **पुष्णातीति**॥ पुष पुष्टौ। क्र्यादिः। भ्वादावप्यस्ति। **आदीनामिति**। आदिशब्दग्राह्यास्तु—सेधतिबोधती भौवादिकौ, ञिष्विदा स्नेहनमोचनयोः भौवादिकः, मनु अवबोधने तानादिकः। विदेरलुकः इत्यादिसूत्र-

1. 'ण। ज्ञा', 2. 'ते ला', 3. 'न ध' क. ख. पाठः.

त्यादीडेव । 'हनुघस्वसप्रच्छः ॥' एषामिण् न । हन्ता । घस्ता । वस्ता । वस इति शपा निर्देशाल्लुग्गतस्य 'वस आच्छादन' इत्यस्येडेव । प्रच्छ् तृ,

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः (८. २. ३६)**

व्रश्चादिधातूनां छशान्तानां च झलि पदान्ते च षत्वं स्यात् । इति तकारे परे छस्य षः । ष्टुत्वम् । प्रष्टा । 'परिम्रुसिविवाचः ॥' पकारादिभ्यः परो यश्चकारः तदन्तानां धातूनामिण् न । पचिरिच्यादेरित्यर्थः ।

**चोः कुः (८. २. ३०)**

चवर्गस्य झलि पदान्ते च कुत्वं स्यात् । पक्ता । रेक्ता । मोक्ता । सेक्ता । विवेक्ता । वक्ता । 'भ्रस्मस्ज्भुरुस्वंसरंभविसृत्ययुनिभाज्जः ॥' भ्रस्जमस्जभुजादीनामिण् न । भ्रस्ज तृ । आर्धधातुक इत्यधिकारे

**भ्रस्जो रोपधयो रमन्यतरस्याम् (६. ४. ४७)**

भ्रस्जेरार्धधातुके परे रेफोपधयोर्निवर्तको रमागमो वा स्यात् । तेन रेफसकारयोर्नाशः । मित्त्वादकारात् परो रम् । रमश्च रेफमात्रमास्ति । भर्ज् तृ । 'व्रश्चभ्रस्ज—' (८-२-३६) इति जस्य षः । ष्टुत्वम् । भर्ष्टा । विकल्पोक्त्या भ्रस्ज् तृ,

---

द्वयोपात्तानां धातूनां विशेषणासञ्जनार्थं स्ववर्ग्येभ्यः (पृथक्करणम्) । एषामिति । हन् । हन हिंसागत्योः । घस् । घस्लृ अदने । प्रकृत्यन्त(र)म् । शब्विकरणः । अदादेशस्य तु स्थान्युपदेशेऽनुदात्तत्वेनापि सिद्धम् । वस् । वस निवासे । प्रच्छ् । प्रच्छ ज्ञीप्सायाम् । नान्तसान्तच्छान्ता न्यूनसंख्याः । तथाहि मनिहनी द्वावेव नान्तौ । तयोरेकः श्यन्विशेषणलाभाय पूर्वसूत्रे निर्दिष्टः । हनिरेक एवावशिष्टः । घसिवसी द्वावेव सान्तौ । प्रच्छिरेक एव छान्तः । अत एवैते गौरवाभावात् प्रतिपत्तिलाघवाच्च स्वरूपेणैव निर्दिष्टाः । तदर्थ एवैषां क्रमव्युदासेन प्राङ् निर्देश इति ज्ञेयम् ॥ **पचिरिच्यादेरिति** । डु पचष् पाके, पच व्यक्तीकरणे द्वावपि । रिचिर् विरेके, रिच वियोजनसम्पर्चनयोरिति यौजादिकश्च । मुच्लृ मोक्षणे । षिच क्षरणे । विचिर् पृथग्भावे । वच परिभाषणे । ब्रुवो वचिरपि यौजादिकोऽपि । वचिर्भ्वादावपीत्येके । चान्ताः षट् ॥ **भ्रस्ज-**

## स्कोः संयोगाद्योरन्ते च (८. २. २९)

झलि परे पदान्ते च संयोगाद्योः सकयोर्लोपः स्यात् । भ्रज् तृ । षत्वष्टुत्वे । भ्रष्टा । मस्ज् तृ,

## मस्जिनशोर्झलि (७. १. ६०)

अनयोर्झलादौ प्रत्यये परे नुं स्यात् । मस्जेरन्त्यात्पूर्वं नुममिच्छन्तीति सजयोर्मध्ये नुं[1] स्यात् । मस्नज् तृ । संयोगादित्वात् सलोपः । मन्ज् तृ । चोः कुः । मन्ग् तृ 'खरि च' (८-४-५५) इति चर्त्वम् । मन् क् तृ । नस्यानुस्वारपरसवर्णौ । मङ्क्ता । भुज् । कुत्वचर्त्वे भोक्ता । रुज् । रोक्ता । स्वञ्जादीनां स्वनज् सनज् इति नोपधत्वादनुस्वारपरसवर्णौ । परिष्वङ्क्ता । सङ्क्ता । रङ्क्ता । भङ्क्ता । विचिवद् विजिरपि पृथक्करणार्थोऽयम् । वेक्ता[2] । सृज् तृ,

## सृजिदृशोर्झल्यमकिति (६. १. ५८)

अनयोरकिति झलादौ परे अम् स्यात् । मित्त्वान्मध्ये । सृ अ ज् तृ । यण्, स्रज् तृ । व्रश्चादिषत्वं, ष्टुत्वम् । स्रष्टा । त्यक्ता । यज् तृ । व्रश्चादिषः । यष्टा । योक्ता । 'णिजिर् शौचपोषणयोः' । नेक्ता । भक्ता ।

---

मस्जभुजादीनामिति । भ्रस्ज पाके ॥ भ्रस्जो रोपधयो रमन्यतरस्याम् । रेफोपधयोर्निवर्तक इति । रोपधयोरिति हि स्थानषष्ठी, स्थानं च प्रसङ्गः । तेन रोपधयोः प्रसङ्गे रं प्रयुज्यत इत्यर्थः । नाश इति । रोपधे न प्रयुज्येते इत्यर्थः । मित्त्वादकारात् पर इति । यस्य हि देशान्तरे विधानं नास्ति स स्थानिनिर्देश एवेत्युचितम् । उपस्थितं परित्यज्यानुपस्थितकल्पनायोगात् । इह तु मित्त्वेनायं न्यायो बाध्यते । स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोऽपि रोपधे निवर्तयति । तदिह रम आदेशत्वागमत्वे द्वे अपीष्टे । यथा श्नमः प्रत्ययागमत्वे ॥ टु मस्जो शुद्धौ । भुज पालनाभ्यवहारयोः । भुजो कौटिल्ये इति च । रुजो भङ्गे । ष्वञ्ज परिष्वङ्गे । षञ्ज सङ्गे । रञ्ज रागे । भञ्जो आमर्दने । विजिर् पृथग्भावे ॥ पृथक्करणार्थ इति । ओविजी भयचलनयोरित्यस्याग्रहणमित्यभिप्रायः । सृज विसर्गे । त्यज हानौ । यज देवपूजादौ । युजिर् योगे ।

---

१. 'नुम् । म' ग. पाठः. २. 'क्ता । 'सृजि' क. ख. पाठः. ३. 'दिना ष' क. पाठः.

'अच्छिसखिहनुस्कंपतुभिक्षुशाद् दः ॥' अदच्छिदादेरिण् न । चर्त्वम् । अत्ता । छेत्ता । सत्ता । खेत्ता । 'हद पुरीषोत्सर्गे' । हत्ता । नोत्ता । स्कन्द तृ । 'झरो झरि—'(८-४-६५) इति दलोपः । स्कन्ता । पत्ता । तोत्ता । भेत्ता । क्षोत्ता । शदिस्तीक्ष्णीभावे विशीर्णतायां च । शत्ता शरो घटश्च । 'साराबंरुक्षुयुक्रुशुन्याद् धः ॥' साधिराधिबन्ध्यादेरिण् न । 'झषस्तथोः —' (८-२-४०) इति तस्य धः । साद्धा । राद्धा । बन्ध् तृ । धत्वे कृते 'झरो झरि—' (८-४-६५) इति पूर्वधलोपः । बन्धा । रुध् । रोद्धा । क्षोद्धा । योद्धा । क्रोद्धा । शोद्धा । व्यद्धा । 'आस्वलिलुचुक्षितिसृतवशात् पः ॥' आपिस्वप्यादेरिण् न । आप्ता । स्वप्ता । लेप्ता । लोप्ता । 'चुप स्पर्शने' । चोप्ता । 'छुप स्पर्शन' इत्येव माधवोक्तम् । छोप्ता । क्षेप्ता । 'तिपृ सेचने' । तेप्ता । सृप् तृ,

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६. १. ५९)

उपदेशेऽनुदात्तस्य ऋदुपधस्य धातोरकिति झलादावं वा स्यात् । अमभावे लघूपधगुणः । स्रप्ता सर्प्ता । तप्, तप्ता । वप्ता । शप्ता । 'यरलाद् भः ॥' यभरभलभामिण् न । तस्य धः । भस्य जश् ।

---

णिजिर् शौचपोषणयोरिति । णिजि शुद्धावित्यस्य त्वग्रहणमित्याशयः । भज सेवायाम् । जान्ताः पञ्चदश ॥ अदच्छिदादेरिति । अद भक्षणे । (छिदिर् द्वैधीकरणे । षद्लृ विशरणगत्यवसादनेषु । खिद दैन्ये । हद पुरीषोत्सर्गे । णुद प्रेरणे । स्कन्दिर् गति)शोषणयोः । पद गतौ । तुद व्यथने । भिदिर् विदारणे । (क्षुदिर् संपेषणे ।) शद्लृ शातने । विदिस्विदिभ्यां सह दान्ताश्चतुर्दश । साधिराधिबन्ध्यादेरिति । राध साध संसिद्धौ । बन्ध बन्धने । रुधिर् आवरणे । अनो रुध कामे इति दिवादिश्च । क्षुध बुभुक्षायाम् । युध सम्प्रहारे । क्रुध कोपे । शुध शौचे । व्यध ताडने । धान्ताः स्विधिबुधिभ्यां सहैकादश ॥ आपिस्वप्यादेरिति । आप्लृ व्याप्तौ । ञिष्वप् शये । लिप उपदेहे । लुप्लृ छेदने । चुप स्पर्शने । क्षिप प्रेरणे दिवादिस्तुदादिश्च । तिपृ क्षरणे । सृप्लृ गतौ । तप सन्तापे । तप ऐश्वर्ये दिवादिः । तप दाहे इत्यपि णिजभावपक्षे । डु वप् बीजसन्ताने । शप उपालम्भे । वक्ष्यमाणाभ्यां तृपिदृपिभ्यां सह पान्तास्त्रयोदश ॥

'यभ मैथुने ।' यब्धा । आरब्धा । लब्धा । 'यरनगान्मः ॥' यमादेरिण् न । यन्ता । रन्ता । नन्ता । गन्ता । 'लिविमृदिस्पृदन्दरुक्रुरेः शः ॥' लिशिविश्यादेरिण् न । 'लिश अल्पीभावे ।' छशां षः । लेष्टा । प्रवेष्टा । मृश्, ऋदुपधत्वाद् वाम् । म्रष्टा मर्ष्टा । आदेष्टा । स्प्रष्टा स्पर्ष्टा । दंश्, दंष्टा । दृश्, 'सृजिदृशोर्झलि—' (६-१-५८) इति अम् । द्रष्टा । 'रिश रुश हिंसायाम् ।' रोष्टा । क्रोष्टा । रिश्, रेष्टा । 'वितुदुत्विाद्विशिशुकृपेः षः ॥' 'विष्लृ व्याप्तौ' । वेष्टा । तुष्, तोष्टा । इत्यादि । कृषेर्वाम् । क्रष्टा कर्ष्टा । 'दिनमिवदरुदुलिरिलोर्हः ॥' दिहिनह्यादेरिण् न । दिह् तृ,

## दादेर्धातोर्घः (८. २. ३२)

धातुपाठे दादेर्धातोर्झलि पदान्ते च हस्य घः स्यात् । धत्वम् । घस्य जश्त्वम् । दोग्धा । नह् तृ ।

## नहो धः (८. २. ३४)

नहेर्झलि पदान्ते च हस्य धः स्यात् । तस्य धत्वं जश्त्वम् । नद्धा । मेह् तृ,

## हो ढः (८. २. ३१)

झलि पदान्ते च हस्य ढः स्यात् । मेढ् तृ । धत्वष्टुत्वे मेढ् ढृ ।

---

यभेत्यादि । यभ मैथुने । रभ राभस्ये । डु लभष् प्राप्तौ । भान्तास्त्रयः ॥ यमादेरिति । यम उपरमे । रमु क्रीडायाम् । णमु प्रह्वत्वे शब्दे च । गम्लृ गतौ । मान्ताश्चत्वारः ॥ लिशिविश्यादेरिति । लिश अल्पीभावे । लिश गतौ इति च । विश प्रवेशने । मृश आमर्शने । दिश अतिसर्जने । स्पृश संस्पर्शने । दंश दंशने । दृशिर् प्रेक्षणे । रिश रुश हिंसायाम् । क्रुश आक्रोशे । शान्ता दश ॥ विष्लृ व्याप्तावित्यादि । तुष तुष्टौ । दुष वैरूप्ये । त्विष दीप्तौ । द्विष अप्रीतौ । शिष्लृ विशेषणे । शुष शोषणे । कृष विलेखने । भौवादिकतौदादिकौ । पिष्लृ सञ्चूर्णने । इह जिषुविषुमिषु इति कषखषशिषेति च दण्डकद्वये पठितौ भ्वादी अपि विषिशिषी ग्राह्याविति माधवादयः । नेति बोप्पदेवादयः । षान्ता घुषिणा विना एकादश ॥ दिहिनह्यादेरिति ।

## ढो ढे लोपः (८. ३. १३)

ढकारस्य ढकारे परे लोपः स्यात् । मेढा । वह् तृ । ढत्वधत्वष्टुत्वढलोपेषु कृतेषु वढृ ।

## सहिवहोरोदवर्णस्य (६. ३. ११२)

सहिवहोर्ढलोपे पूर्वस्यावर्णस्य ओत् स्यात् । वोढा । दहेर्दादित्वाद् घः । दग्धा । रुहेर्ढत्वादि मिहिवत् । रोढा । दुहेर्घः । दोग्धा । लिहेर्ढत्वादि, लेढा । रिह वधे, लुह गार्ध्ये, रेढा लोढा ।

कारिकायां रिहिलुही नोक्तौ वृत्तिकृता पुनः ।
कैश्चिच्चाभ्युपगम्येते इत्यु(क्त्वा ? क्त्या)ङ्गीकृताविमौ ॥
वेटोस्तृप्यतिदृप्यत्योः पाठो यः कारिकाकृतः ।
सोऽनुदात्तस्य चेत्येवममर्थ इति वृत्तिकृत् ॥
एवं मृजेः पाठपक्षेऽप्यमर्थमिति कौमुदी ।
वृत्तावमागमस्त्वस्य न दृश्यत इतीरितम् ॥
एवमेषां हि धातूनां नेट् स्यात् सर्ववलादिषु ।

---

दिह उपचये । णह बन्धने । मिह सेचने । वह प्रापणे । दह भस्मीकरणे । रुह बीजजन्मनि प्रादुर्भावे च । दुह प्रपूरणे । दुहिर् इति भ्वादिस्तु नेह गृह्यते । लिह आस्वादने । रिह वधे । लुह गार्ध्ये । हान्ता दश । कारिकायामनुक्तयोरपि रिहिलुह्योरिह पाठे हेतुमाह — कारिकायामित्यादिना । कारिकायामुक्तयोरपितृप प्रीणने दृप हर्षविमोचनयोरित्यनयोरिहापाठे तत्र पाठे च कारणमाह — वेटोरिति । रधादित्वादनयोर्वेट्त्वम् । तृप्यतिदृप्यत्योरिति ।

तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ।
तृप्दृपी तौ वारयितुं श्यना निर्देश आदृतः ॥

**अमर्थमिति** । मृजेरूदित्त्वेन 'स्वरतिसूती'ति वेट्त्वात् । **एवमिति** । तृचि यथा तथेत्यर्थः ।

एत एवानुदात्ताख्या उदात्तास्त्वन्यधातवः ॥

संज्ञायामनिटावन्यौ तृंस्तृचौ स्त उणादिषु ।
तेन शास्ता पुरस्ताष्टेत्युदात्तेभ्योऽपि नेट् क्वचित् ॥

अथ विकल्पितेटः ।

**स्वरतिसूतिसूयतिधूञूदितो वा (७. २. ४४)**

स्वरत्यादिभ्य ऊदिद्भ्यश्च परस्य वलादेरिड् वा स्यात् । 'स्वृ शब्दे' । स्वरिता । स्वर्ता । सूतिसूयत्योः, सविता, सोता । प्रेरणार्थस्य सुवतेस्तु सवितेतीडेव । धूञो धविता धोता । ऊदिद्भ्यः गुपू । गोपिता गोप्ता । मृजू ।

**मृजेर्वृद्धिः (७. २. ११४)**

मार्जिता । इडभावे व्रश्चादिषः ष्टुत्वम् मार्ष्टा । 'गुहू संवरणे' । इट्पक्षे गुणे कृते, गोहि तृ ।

---

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् ।
तदा चतुर्भिरधिकं घुषिर्यद्यत्र गण्यते ॥

कचछजा दधनपा भमशाः षसहाः क्रमात ।
कचका णणटा खण्डो गघञाष्टखञाः स्मृताः(?) ॥

अत्र पूर्वार्धगताः कादयस्तदाद्यन्तान् धातूनाहुः । उत्तरार्धगतास्तु कादिक्रमेण गणने या सङ्ख्या आत्मना पूर्यते तां सङ्ख्यामाहुः । यथा पूर्वार्धगतेन जकारेण जान्ता भ्रस्जादय उक्ताः । उत्तरार्धगतेन ण इत्यनेन ते पञ्चदशेत्युक्तं भवति । ज. ण = जान्ताः पञ्चदशेत्यर्थः । एवं सर्वत्र योज्यम् । शास्तेत्यादावु-(दात्ते) कथमनिट्त्वमित्याशङ्क्याह—**संज्ञायामिति** । **स्वरति(सूति)सूयतिधूञूदितो वा** । सवितेति सोतेति । सूतिसूयतीति विकरणेन निर्देशादिति भावः । धूञिति सानुबन्धकनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः । वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम् । अत्र स्वरतेरनुदात्तत्वादप्राप्तविभाषा । इतरेषां

## ऊदुपधाया गोहः (६. ४. ८९)

सगुणस्य गुहेरचि परे उपधाया ऊत् स्यात् । गूहिता । अनिट्यजभावादूत्वं न । ढत्वादौ कृते गोढा ।

## रधादिभ्यश्च (७. २. ४५)

रधनशतृपदृपद्रुहमुहष्णुहष्णिहिभ्यः श्यन्गतेभ्यो वेट् स्यात् । रध् इ तृ । 'रधिजभोरचि' (७-१-६१) इति नुमि प्राप्ते,

## नेट्यलिटि रधेः (७. १. ६२)

रधेरलिटीडादिप्रत्यये परे न नुं स्यात् । रधिता । रद्धेत्यनजादित्वान्न नुम् । लिटि तु ररन्धिव । नशेर्नशिता । अनिट्त्वे तु 'मस्जिनशोर्झलि' (७-१-६०) इति नुम् । छशां षः । नंष् तृ । 'नशेर्वा' (८-२-६३) इति पदान्तोक्तं कुत्वं झल्यपि वा स्यादिति कौमुदी । नङ्क्ता नंष्टा । प्रादियोगे तु 'उपसर्गादसमासेऽपि —' (८-४-१४) इति णत्वे प्राप्ते,

## नशेः षान्तस्य (८. ४. ३६)

कृतषत्वस्य नशेर्णत्वं न । प्रनंष्टा । कुत्वमपि षत्वे कृत एव जातमिति तत्रापि षान्तत्वाण्णत्वं न । प्रनङ्क्ता । अषान्तत्वे तु प्रणशिता । तृपिदृप्योरिटि तर्पिता दर्पिता । इडभावे, 'अनुदात्तस्य च —' (६-१-५९) इति वाम् । त्रप्ता, तर्प्ता । द्रप्ता, दर्प्ता । द्रुहादेरिटि द्रोहिता मोहिता । 'ष्णुह उद्गिरणे', स्नोहिता । स्नेहिता । अनिट्त्वे तु,

## वा द्रुहमुहष्णुहष्णिहाम् (८. २. ३३)

---

तु प्राप्तविभाषा ॥ ऊदुपधाया गोहः । गोह इति विकृतग्रहणं यत्रास्यैतद् रूपं तत्र यथा स्यादित्येवमर्थमित्याह—सगुणस्येति । तेनेह न । नि(जु)गुह

---

१. 'स्यत्रान' क. ख. पाठः.

एषां झलि पदान्ते च हस्य वा घः स्यात् । द्रोघ् तृ । घत्व-जश्त्वे । द्रोग्धा । घत्वाभावे ढत्वधत्वष्टुत्वढलोपाः । द्रोढा । एवं मोग्धा मोढा । स्नोग्धा स्नोढा । स्नेग्धा स्नेढा ।

निरः कुषः (७. २. ४६)

निष्कुषेरिड् वा स्यात् । निष्कोषिता निष्कोष्टा । सुरुनुदुवा-मल्लिटीड् वेति कौमुदी । सुनोतेरनुज्ञैश्वर्यार्थस्य सवतेश्च सविता सोता । रविता रोता । नविता नोता । 'दु गतौ', दविता दोता । चायृस्फाय-प्यायामिड् वेति सैवाह । 'चायृ पूजानिशामनयोः' । 'स्फायी ओ प्यायी वृद्धौ' । अनिट्त्वे तु 'लोपो व्योर्वलि' (६-१-६६) इति वलि परे यलोपः । चायिता चाता । स्फायिता स्फाता । प्यायिता प्याता ।

तीषसहलुभरुषरिषः (७. २. ४८)

इषादिभ्यस्तादावार्धधातुके इड् वा स्यात् । एषिता एष्टा । 'इष गतावि'त्यस्यात्राग्रहादेषितेत्येव । सहिता । अनिट्त्वे[2] ढलोपे 'सहि-वहोरोदवर्णस्य' (६-३-११२) इत्योत्त्वम् । सोढा । लोभिता लोब्धा । रोषिता रोष्टा । रिषिर्हिंसार्थः । रेषिता रेष्टा । भृस्तुशुचिवस्यशिभ्य-स्तादेरार्धधातुकस्येड् वेति कौमुदी । भरिता भर्ता । स्तविता स्तोता । शोचिता शोक्ता । वसिता वस्ता । लुग्गतोऽयम् । अशिता अष्टा ।

> एवमेवाखिलं ग्राह्यं तुमुन्तृन्तव्यतासिषु ।
> क्त्वानिष्ठयोरपि प्रायस्तुल्यमन्यत्तु वक्ष्यते ॥

'कुट कौटिल्ये' । कुट् इ तृ ।

---

तुरिति ॥ (ती)षसहलुभरुषरिषः । इष गतावित्यस्येति । 'इषेस्तकारे श्यन्-प्रत्ययात् प्रतिषेध' इति वार्त्तिककारवचनाद् 'इष आभीक्ष्ण्ये' इति क्रैया-

---

१. 'त्वे लो' ग. पाठः. २. 'रिश्यो' क. ख. पाठः.

## गाङ्कुटादिभ्योऽञ्णिन्ङित् (१. २. १)

इङादेशाद् गाङः कुटादिभ्यश्च परो ञ्णिद्वर्जितः प्रत्ययो ङित् स्यात् । इति तृचो ङित्त्वाद् गुणाभावः । कुटिता । पुटिता । ञ्णितोस्त्वङित्त्वाद् गुणः । घञ् । उत्कोटः । ण्वुल् । उत्कोटकः । 'व्यच व्याजीकरणे' । व्यच् इ तृ । 'व्यचेः कुटादित्वमनसीति वक्तव्यम्[1]' (वा० १-२-१) । तेन 'ग्रहिज्या—' (६-१-१६) इति सम्प्रसारणम् । विचिता व्याचकृत् । औणादिकासुनि त्वङित्त्वात् सम्प्रसारणाभावः । उरुव्यचाः ।

लिखेः कुटादिकार्येण लिखितेत्यादि केचन ।
हराद्या लेखितेत्याहुर्वर्धमानो द्वयं जगौ ॥

## विज इट् (१. २. २)

विजेरिडादिः प्रत्ययो ङित् स्यात् । उद्विजिता । इडभावे[2] तु उद्वेजनीयम् ।

---

दिकस्यात्र ग्रहणमिष्टमेवेत्याशयः ॥ गाङ्कुटादिभ्योऽञ्णिन्ङित् । इङादेशादिति । (ना ? गा)ङादेशे ङकारानुबन्धकरणमिह विशेषणार्थमेव । अतो 'गाङ् गतौ'विति धातुरत्र न गृह्यत इत्यर्थः । केचनेति । कुटस्य आदिः कुटादिः । कुट आदिर्येषां ते कुटादयः । कुटादिश्च कुटादयश्चेति बहुव्रीहितत्पुरुषयोरेकशेषः । अत्र तत्पुरुषेण लिखेरपि कुटस्यादितया सोऽप्यत्र गृह्यत इति तेषामाशयः । हराद्या इति । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सौत्रप्रयोगान्नात्र तत्पुरुषवृत्तिराश्रीयत इति तदभिप्रायः । तन्मते स्वयमेव लिखिष्यते इत्यादयः प्रयोगाः 'संज्ञापूर्वको विधिरनित्य' इति समाधेयाः ॥ विज इट् । कुटादिसाहचर्यात् तौदादिकस्य 'ओविजी भयचलनयोरि'त्यस्य ग्रहणं, न तु जौहोत्यादिकस्य 'विजिर् पृथग्भावे' इत्यस्य । इह वृद्धसंज्ञासूत्राद् यस्यादिरित्यनुवर्तते । तेनेड् विशेष्यते यस्यादिरिडिति । तेन उत्तमैकवचनस्य ग्रहणं न । नह्यसौ कस्यचिदादिः । अतएवागममात्रस्यायं ङित्त्वविधिर्न भवति, किं तर्हि, तदादेः प्रत्ययस्येत्याह—इडादिः प्रत्यय इति ॥

---

१. 'वाच्यम् ।', २. 'वे उ' क. ख. पाठः.

## विभाषोर्णोः (१. २. ३)

ऊर्णुधातोरिडादिर्वा ङित् स्यात् । अङित्त्वे गुणः । ऊर्णविता । ङित्त्वे तु,

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६. ४. ७७)

अजादौ प्रत्यये परे इवर्णोवर्णान्तानां धातूनां श्नुप्रत्ययान्तस्य भ्रुवश्च इयङ् उवङ् इत्यादेशौ स्तः । ङित्त्वादन्त्यस्य । एरियङ् । ओरुवङ् । ऊर्णुविता । अनिटस्त्वङित्त्वादूर्णवनीयम् ।

## मीनातिमिनोतिदीङां ल्यपि च (६. १. ५०)

'मीञ् हिंसायां', 'डुमिञ् प्रक्षेपणे', 'दीङ् क्षये', एषामेज्निमित्ते ल्यपि च कर्तव्ये आत्वं स्यात् । अत्र तृचो गुणहेतुत्वादेज्निमित्तत्वम् । प्रमाता रिपोः । निमाता बीजस्य । उपादातृ धनम् ।

## विभाषा लीयतेः (६. १. ५१)

लीधातोरेज्निमित्ते ल्यपि चात्वं वा स्यात् । लाता । लेता । 'अर्हे कृत्यतृचश्च' (३-३-१६९.) इत्यर्हार्थे तृच् । अयं कन्याया वोढा । तद्योग्य इत्यर्थः । इति ।

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (३. १. १३४)

नन्द्यादेर्ल्युः, ग्रहादेर्णिनिः, पचादेरच् स्यात् । लचौ स्वरार्थौ । णिनेरिकारो 'हलन्त्यम्' (१-३-३) इति नलोपाभावार्थः । णो वृद्ध्यर्थः ।

---

**अचिश्नुधातुभ्रुवां य्वोरियङुवङौ** । इश्च उश्च यू, तयोर्य्वोः । धातोरेव विशेषणमेतत्, नतु श्नुभ्रुवोः, अव्यभिचारात् इत्याह — **इवर्णोवर्णान्तानां धातूनामिति** ॥ **मीनातिमिनोतिदीङां ल्यपि च** । **कर्तव्ये इति** । इहोपदेश इत्यनुवृत्तेः प्रागेव प्रत्ययोत्पत्तेरात्वमित्यर्थः । तेनोपदायः इत्यत्र घञ् सिध्यति । अन्यथा 'एरच्' स्यात् ॥ **विभाषा लीयतेः** । लीयतेरिति यका निर्देशोऽयं, नतु श्यना । तेन 'लीङ् श्लेषणे' दिवादिः, 'ली श्लेषणे' क्र्यादिः, द्वयोरपि सामान्यग्रहणमित्याह — **लीधातोरिति** । इतिशब्दः तृच्प्रकरणसमाप्तिं द्योतयति ॥ **नन्दिग्रहिपचादिभ्यो ल्युणि-**

अत्र भोजः — 'नन्दिवाशिमदिनर्दिसाधिशोधिशोभिवर्धिभीषिभूषिदूषिसहिदृपिजल्पिभ्यो ल्युः ॥' योरनः । एषु दूषिपर्यन्ता णिजन्ताः । नन्दि अन । 'णेरनिटि' (६-४-५१) इति णिलोपः । नन्दयतीति नन्दनः । वाशनः शब्दयिता । मदनः । नर्दनः । साधनः । शोधनः । शोभनः । वर्धनः । भीषणः । भूषणः । दूषणः । सहत इति सहनः । दर्पणः । जल्पनः । 'रमिरुचिकृतितपितृदिदहियुपूभ्यः संज्ञायाम् ॥' रमयतीति रमणः । विरोचनः । विकर्तनः । तपनः । प्रतर्दनः । दहनः । यवनः । पवनः । 'लुवो नो णश्च ॥' नाम्न्येव । लुनाति जाड्यमिति लवणम् । 'समि क्रन्दिकृषिहृषिभ्यः ॥' सम्पूर्वात् क्रन्दादेर्नाम्नि ल्युः । सङ्क्रन्दनः । सङ्कर्षणः । संहर्षणः । 'कर्मणि दम्यर्दिनाशिसूदिभ्यः ॥' कर्मण्युपपदे दम्यादेर्ल्युः । शत्रुदमनः । द्विषदर्दनः । रिपुनाशनः । मधुसूदनः । ग्रहादिभ्यस्तु[1] 'ग्रहिस्थापराधिमन्त्रिसंमर्दिभ्यो णिनिः ॥' वृद्धिः । ग्राहिन् । सुप्कार्यम् । ग्राही । युक् । स्थायी । अपराधी । मन्त्री । सम्मर्दी । मन्थीत्यपि भट्टिः । 'उपावयो रुधः ॥' उपरोधी । अवरोधी । 'उदि भासिदसिसहिभ्यः ॥' उद्भासी । 'दसु उपक्षये' । उद्दासी । उत्साही । 'श्रुशाविशिवासिवपिरक्षिभ्यो नौ ॥' निश्रावी । 'शो तनूकरणे' ।

## आदेच उपदेशेऽशिति (६. १. ४५)

धातुपाठ एजन्तस्य धातोरात्वं स्यात्, शिति प्रत्यये कर्तव्ये तु न । इत्यात्वे युक् । निशायी । निवेशीत्यादि । 'याचिव्रजिवदिवसिव्याहृसंव्यवहृभ्यो नञि ॥' अयाची । अव्राजीत्यादि । 'अचोऽचित्तवत्कर्तृकात् ॥' नञ्पूर्वादजन्ताद् धातोरचेतने कर्तरि णिनिः । अकारी धर्मस्य बालातपः । 'अभौ[2] भुवो भूते ॥' अभौ भुवो भूतार्थे णिनिः । अभिभूतवान् अभिभावी । 'परिव्योर्गुणश्च वा ॥' पक्षे वृद्धिः । परिभवी परिभावी । विभवी विभावी । 'विशयी विषयी च देशे ॥' इति । पचादेरच् । पचः । करः । ध्रुव इति च पठ्यते । 'अच्यदेर्घस्लभावो वाच्यः' (वा० २-४-३७) । प्रघसो विघसश्च भोक्ता । 'नदन्यचः ॥ दूषण इति । 'दोषो णावि'त्यूत्वम् । विशयी विषयीति । इह वृद्ध्यभावो निपात्यते । विषयी इत्यत्र षत्वमपि । ध्रुव इति च पठ्यत इति ।

---

१. 'दिस्तु ग्र', २. 'भिभुवो भूधातोर्णिनिः' ग. पाठः.

भषप्लुगॄतॄदॄसूदिदिविसिविचरिचोरिचिलिगाहिभ्यष्टित् ॥' एभ्यष्टिदच् स्यात् । नदः । भषः । प्लवः । 'अचि विभाषा'(८-२-२१) इति लत्वे गलो गरो वा भोक्ता । प्राण्यङ्गे गले नित्यं लत्वम् । विषे तु नैवेष्टम् । गिरति प्राणानिति गरो विषम् । तरः । दरः । सूदः । देवः । सेवः । चरः । चोरः । चेलः । गाहः । टित्त्वं ङीबर्थम् । नदी । दरी । देवी । भ्रुवचेलौ निन्द्यार्थौ ।

पचाद्यच् सर्वधातुभ्यो वक्तव्य इति भाष्यकृत् ।
अत एव ण्वुल्तृजचः सामान्येनाह भोजराट् ॥

तेन यङन्तानां 'सनाद्यन्ता धातवः' (३-१-३२) इति धातुत्वादच् । लोलूय अ ।

यङोऽचि च (२. ४. ७४)

अचि परे यङो लुक् स्यात् ।

प्रत्ययस्य लुक्श्लुलुपः (१. १. ६१)

प्रत्ययादर्शनस्य लुक्, श्लु, लुप्, इति संज्ञाः । लोलू अ । ऊतो गुणे प्राप्ते,

न धातुलोप आधाधतुाके (१. १. ४)

धात्वंशलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः । उवङ् । लोलुवः । रोरुधः । नेनीयजेजीययोर्यङो लुकि गुणाभावादियङि प्राप्ते,

---

'घरूपकल्पे'ति सूत्रे वृत्तौ भ्रुव इति पचाद्यचि वच्यादेशो गुणभावश्च निपातनान्न भवतीत्युक्तत्वादिति भावः । **पचाद्यच् सर्वधातुभ्यो वक्तव्य इति भाष्यकृ-दिति** । पचादिपाठस्तु न(द)भषादीनामनुबन्धासञ्जनार्थः, केषाञ्चिद् बाधकबाधनार्थः । यथा जारभरेति पठ्यते । अत्र कर्मण्यण् बाध्यते । दीव्यतेरिगुपधलक्षणे के प्राप्ते तद्बाधनार्थोऽनुबन्धासञ्जनार्थश्च । अन्येषां प्रपञ्चार्थो द्रष्टव्यः ॥ **न धातुलोप आर्धधातुके** । कृत्स्नस्य धातोर्लोपे प्रतिषेधवैयर्थ्यादिह धातुशब्दस्तदेकदेशे वर्तत इत्याह — **धात्वंशेति** । धात्वंशलोपनिमित्त इत्यनेन धातुलोप इत्यत्र धातोर्लोपो यस्मिन्निति बहुव्रीहिराश्रीयत इति दर्शितम् । आर्धधातुके परे इको गुणवृद्धी इत्यनेन गुणवृद्ध्योरप्यार्धधातुकं निमित्तत्वेन

## एरनेकाचोऽसंयोगपूर्वस्य (६. ४. ८२)

धात्वंशः संयोगः पूर्वो यस्मादिवर्णान्नास्ति, तदन्तानामनेकाचामङ्गानां धातुस्थस्येवर्णस्याचि परे यण् स्यात् । नेन्यः । जेज्यः । संयोगपूर्वस्येवर्णस्य त्वियङेव । शेश्रियः । उदन्ताद् यङो लुङ् नेति केचिदिति कौमुदी । 'रु शब्दे' । रोरूय अ ।

## अतो लोपः (६. ४. ४८)

अदन्तस्याङ्गस्यार्धधातुके परेऽन्त्यलोपः स्यात् । इति यङकारलोपः । रोरूयः । 'चरिचलिपतिवदीनामच्याक्चाभ्यासस्य' (वा० ६-१-१२) । एषामचि परे द्विरुक्तिरभ्यासस्यागागमश्च स्यात् ।

## पूर्वोऽभ्यासः (६. १. ४)

द्विरुक्तयोः पूर्वोऽभ्याससंज्ञः । चरतीति चराचरः । चलाचलः । पतापतः । वदावदः । अभ्यासस्यागचीत्युक्तेरभ्यासस्योक्तमन्यत् कार्य-

---

विशेषणमित्येतच्च दर्शितम् । एवञ्च धात्वंशलोपस्य इग्लक्षणगुणवृद्ध्योश्चैकार्धधातुकनिमित्तत्व एवायं निषेधः स्यादिति सिद्धम् । अतश्च क्नोपयति उपेद्ध इत्यादौ न प्रवर्तते । आद्ये वलि लोपस्य द्वितीये अतो गुणस्य चार्धधातुकनिमित्तत्वाभावात् । धातुलोप इति किम् । आर्धधातुके विधिसामर्थ्याच्च गुणवृद्ध्योर्विकल्पो मा भूत् । इक इति किम् । अभाजि । रागः । 'भञ्जेश्च चिणि' 'घञि च भावकरणयोरि'त्युपधालोपे कृते 'अत उपधाया' इति वृद्धिर्यथा स्यात् । आर्धधातुक इति किम् । (तो)तोर्ति । अत्र हि वकारलोपस्य गुणस्य च सार्वधातुकं निमित्तम् ॥ **एरनेकाचोऽसंयोगपूर्वस्य** । 'अचि श्नुधात्वि'ति सूत्रे द्वन्द्वनिर्देशेऽपि धातुरेवेह सम्बध्यते, नतु श्नुभ्रुवौ, तयोरिवर्णासम्भवात् । धातुग्रहणं चावृत्त्या उभाभ्यां सम्बध्यते संयोगेनेकारेण चेति व्याचष्टे— (धात्वंश इति) । धात्वंश इत्यादिविशेषणादिह स्यादेव यण् -- उन्नयतीत्युन्नीः उन्न्यौ उन्न्य इति । धात्वंशस्येवर्णस्येत्युक्तेः हरिं हरी इत्यादौ न । अन्यथा इहापि प्रध्यं प्रध्यौ इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात् ॥ **अन्यत् कार्यमिति** । हलादिः शेषो ह्रस्वश्च नेत्यर्थः । अन्ये तु आगमस्य

मत्राचि न । 'द्वित्वं वेति वाच्यम्' (वा० ६-१-१२) चरः । चलः । पतः । वदः । 'हन्तेर्घत्वं च' (वा० ६-१-१२) हनेरचि द्वित्वमभ्यासहस्य घश्च स्यात् । घनाहन,

अभ्यासाच्च[1] (७. ३. ५५)

अभ्यासात् परस्य[2] हन्तेर्हस्य कुत्वं स्यात् । घनाघनो हन्ता वर्षुकमेघश्च । 'पाटेर्णिलुक् चोक्चाभ्यासस्य' (वा० ६-१-१२) । पाटयतेरच् । पाटि अ । णिलुक् ।

न लुमताङ्गस्य (१. १. ६३)

लुक्श्लुलुपो लुमन्तः । तैः प्रत्ययलोपे कृतेऽङ्गस्य लुप्तप्रत्ययाश्रितकार्यं न स्यात् । इति णिलुका वृद्धेरप्यभावः । पट् अ । द्वित्वमभ्यासस्याप्यूक् । पटूपटः ।

माधवोऽभ्यासदीर्घोक्त्या पाटूपट इतीच्छति ।
पाटेर्णिलुग् दीर्घ ऊक् चेत्यूचिवान् भोजराडपि ॥

'तमः पटपटूपटम्', 'आटोपपाटूपटमि'ति च प्रयोगः । द्वित्वं वेति हरः । पाटः । मेहति सिञ्चतीति मेघः । न्यग्रोहतीति न्यग्रोधः ।

न्यङ्क्वादीनां च (७. ३. ५३)

एषां दृष्टं कुत्वादिकार्यं[3] साधु स्यात् । इति मिहेः कुः । रुहेर्धः ।

दाशगोघ्नौ सम्प्रदाने (३. ४. ७३)

द्वौ सम्प्रदानार्थावजन्तौ । निपातनाद् घ्नभाव इति माधवः । 'दाशृ दाने' । दाशन्त्यस्मै मांसार्थमिति दाशः । गौर्हन्यतेऽस्मै पूजार्थमिति गोघ्नोऽतिथिः । पूजार्हेऽप्यतिथौ स्यात् । स्त्रियां गोघ्ना । अयं टकीति मते टित्त्वान्ङीप् । गोघ्नी । इति ।

---

दीर्घत्वसामर्थ्यादेवैतौ न स्त इत्याहुः ॥ अभ्यासाच्च । पूर्वसूत्राद् हन्तेरिति ह इति चानुवर्तते ॥ माधव इति । अन्ये तु टक एव निपातनमाश्रित्य 'गमहने'त्युपधालोपमाहुः ॥ पूजार्हेऽप्यतिथाविति । निपातनस्य रूढ्यर्थत्वाद्

---

१. 'च । हन्ते' ग. पाठः. २. 'स्य हस्य' क. ख. पाठः. ३. 'र्यं स्या' ग. पाठः.

इगुपधज्ञाप्रीकिरः कः (३. १. १३५)

इगुपधेभ्यो ज्ञादेश्च कः स्यात् । कित्त्वादगुणः । लिखः । बुधः । सृपादेरिगुपधत्वेऽपि पचाद्याजिष्टः । सर्पः, मेषः, योधः, इत्यादिप्रयोगा ज्ञेयाः । ज्ञा अ ।

आतो लोप इटि च (६. ४. ६४)

क्ङित्यजादावार्धधातुके इटि च परे आतो लोपः स्यात् । ज्ञः । इयङ् प्रियः ।

ऋत इद्धातोः (७. १. १००)

ऋदन्तस्य धातोरङ्गस्य इत् स्यात् । रपरत्वात् किरः । 'ग्रो लश्च ॥' इति भोजः । गिलः ।

आतश्चोपसर्गे (३. १. १३६)

सोपसर्गादादन्तात् कः स्यात् । सुदः । सुयः । 'कविषये (सर्वत्र) प्रसारणिभ्यो डो वाच्यः' (वा०३-२-३) । आह्वा अ ।

टेः (६. ४. १४३)

डिति प्रत्यये परे सर्वत्र टेर्लोपः स्यात् । आह्वयतीत्याह्वः । के कृते तु यजादित्वादुत्वे उवङ्याहुव इत्यनिष्टं स्यात् ।

पाघ्राध्माधेट्दृशः शः (३. १. १३७)

शित्त्वात् सार्वधातुकत्वम् । पा अ ।

कर्तरि शप् (३. १. ६८)

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शित्त्वफलं प्राग्वत् । पित्त्वं गुणार्थमिति वक्ष्यते । पा अ अ ।

---

गोहननाभावेऽपि पूजार्हातिथिमात्रे स्यादिति भावः ॥ इगुपधज्ञाप्रीकिरः कः । इगुपधादौ समाहारद्वन्द्वे नपुंसकह्रस्वप्रसङ्गादितरेतरयोगद्वन्द्वः । व्यत्ययेन भ्यसो ङसिः । वासरूपविधानादेभ्यो ण्वुल्तृचावपि । लेखकः, लेखिता इत्यादि ॥ आतश्चोपसर्गे । 'श्याद्व्यधे'ति णस्यापवादोऽयम् ॥ पाघ्राध्माधेट्दृशः शः । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति परि-

---

१. 'गाद् ज्ञेयम् । ज्ञा' घ. ङ. च. पाठः. २. 'वक्तव्यः' ङ. च. पाठः.

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः (७. ३. ७८)

सार्वधातुके परे पादीनां क्रमात् पिबादय आदेशाः स्युः। पिब अ अ। 'अतो गुणे' (६-१-९७) इति द्विः पररूपम्। उत्पिबः। जिघ्रः। धमः। अशितीत्युक्त्या घेट आत्वाभावाद्यादेशः। धयः। पश्यो द्रष्टा। 'पश्यार्थैः—' (८-१-२५) इति सूत्रोक्त्या भावेऽपि शप्रसिद्धेर्दर्शनमपि पश्यः। 'सम्पद्यकर्तरि च्विरि'ति निर्देशात् सम्पदेः श इति रामः। सम्पद् अ,

दिवादिभ्यः श्यन् (३. १. ६९)

एभ्यः शब्विषये श्यन् स्यात्। शनावितौ। अतो गुणे। सम्पद्यः सम्पत्ता। घ्राधातोः संज्ञायां शो न। व्याघ्रः। आघ्रा नासिका। 'आतश्च—' (३-१-१३६) इति कः।

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च (३. १. १३८)

अनुपसर्गेभ्यः एभ्यः शः स्यात्। लिप् अ। विद् अ।

तुदादिभ्यः शः (३. १. ७७)

एभ्यः शब्विषये शः स्यात्। इति मध्येऽपि शः। लिप् अ अ। विद् अ अ।

शे मुचादीनाम् (७. १. ५९)

मुचलुपविदलिपसिचकृतखिदपिशां शे परे नुं स्यात्। अतो गुणे। लिम्पः। विन्दः। धार्यादीनां णिजन्तानां शब्गुणौ। धारे अ

---

भाषया लुग्विकरणस्थस्य 'पा रक्षणे' इत्यस्यात्राग्रहणम्। 'पाघ्राध्मास्थे'ति सूत्रेऽप्येवम्॥ संज्ञायां शो नेति। 'उपमितं व्याघ्रादिभिरि'ति निर्देशोऽत्र ज्ञापकः॥ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च। अनुपसर्गादिति व्यत्ययेन बहुवचनस्थान एकवचनमित्याह— अनुपसर्गेभ्य इति। इह लिम्पविन्देति भाविना नुमा सहितौ निर्दिष्टौ। तेन लाभार्थस्यैव

---

1. 'मः। ध' ङ. च. छ. पाठः.

अ । अतो गुणे । धारयो धर्ता, धारयिता वा । पारयः शक्तः पूरयिता वा । वेदयो ज्ञाता ज्ञापयिता लम्भयित्रादिर्वा । उदेजयः कम्पयिता शोभयिता वा । चेतयः चैतन्यकृत् ज्ञाता वा । सातिः सौत्रः सुखार्थः । सातयः सुखयिता । साहयः सोढा साहयिता वा । सोपसर्गात्तु प्रलिपः । इगुपधात् कः । 'नौ लिम्पेः शो वाच्यः' (वा० ३-१-१३८) । निलिम्पा देवाः । 'गवादिषु विन्देः संज्ञायाम्' (वा० ३-१-१३८) । गोविन्दः । अराणि दलानि विन्दतीत्यरविन्दम् । तुच्छधनलाभात् कुविन्दस्तन्तुवायः ।

**ददातिदधात्योर्विभाषा (३. १. १३९)**

अनुपसर्गयोर्दाञ्धाञोः शो वा स्यात् । शपि कृते,

**जुहोत्यादिभ्यः श्लुः (२. ४. ७५)**

एभ्यः[1] शपः श्लुः स्यात् । लोप इत्यर्थः ।

---

विदेर्ग्रहणं न सत्ताद्यर्थानाम् । 'धृङ् धारणे' भौवादिकः । 'धृङ् अवस्थाने' *चौरादिकः । ण्यन्तयोर्द्वयोर्ग्रहणमित्याह — धर्ता धारयिता वेति । कथं 'न मद्यमत्रोत्तरधारयस्ये'ति श्रीहर्षप्रयोगः । परत्वाद्धि सूत्रधारादावित्र कर्मण्यणा भाव्यम् । सत्यम् । कर्मणः शेषत्वविवक्षायामणोऽप्राप्तौ शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति । 'पार तीर कर्मसमाप्तौ' । 'पॄ पालनपूरणयोः' । ण्यन्तयोर्द्वयोरपि ग्रहणम् । तदाह — शक्तः पूरयिता वेति । 'विद चेतनाख्याननिवासेषु', चुरादिः । ज्ञानाद्यर्थानामन्यतमो हेतुमण्ण्यन्त इत्याह — ज्ञातेत्यादि । 'एजृ कम्पने' । 'एजृ भ्राजृ दीप्तौ' । द्वयोर्ण्यन्तयोर्ग्रहणमिति दर्शयति — कम्पयिता शोभयिता वेति । ज्ञाता वेति । 'चिती संज्ञाने' अस्य ज्ञानार्थताप्यस्तीति धातुखण्डे वक्ष्यति । सुखयितेत्यनेन सातेर्हेतुमण्ण्यन्तता दर्शिता । 'षह मर्षणे' । स्वार्थण्यन्तहेतुमण्ण्यन्तयोर्ग्रहणमिति द्योतयन्नाह — सोढा साहयिता वेति । गवादिषु विन्देरिति । कर्मण्यणो बाधनायेदम् ॥ ददातिदधात्योर्विभाषा । ननु 'दद दाने', 'दध धारणे' । आभ्यां पचाद्यचि ददो दध इति दाधाभ्यां णे दायो धाय इति च सिद्धम् ।

---

1. 'भ्यः श्लुः' ग. पाठः.

* 'तौदादिकोऽयं प्रसिद्धः ।

श्लौ (६. १. १०)

श्लौ परे धातोर्द्विर्वचनं स्यात् ।

ह्रस्वः (७. ४. ५९)

अभ्यासस्य ह्रस्वः स्यात् ।

अभ्यासे चर्च (८. ४. ५४)

अभ्यासे झलां जशादेशश्चरादेशश्च स्यात् । झशां जश । खरां चर् । द्दा अ । द्धा अ ।

सार्वधातुकमपित् (१. २. ४)

सार्वधातुकं ङित् स्यात्, पित्तु न : इति शस्य ङित्त्वम् ।

उभे अभ्यस्तम् (६. १. ५)

द्विरुक्तयोरुभयोः सहाभ्यस्तमिति संज्ञा ।

श्नाभ्यस्तयोरातः (६. ४. ११२)

श्नाया अभ्यस्तानां च क्ङिति सार्वधातुके परे आतो लोपः स्यात् । ददः । दधः । शस्य विकल्पाद् वक्ष्यमाणो णश्च । युक् । दायः । धायः ।

ज्वलितिकसन्तेभ्यो णः (३. १. १४०)

इतिराद्यर्थे । अनुपसर्गेभ्यो ज्वलादिभ्यः कसिपर्यन्तेभ्यो वा णः स्यात् । विकल्पात् पचाद्यच् । ज्वलतीति ज्वालः, ज्वलः । चालः, चलः । इत्यादि ।

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च (३. १. १४१)

श्याधातोरादन्ताद् व्यधादिभ्यश्च नित्यं णः स्यात् । श्याधातो-

सत्यम् । अददः । अदधः । इहाव्ययपूर्वपदप्रकृतिस्वरार्थमिदम् । अच्प्रत्ययान्तत्वे हि 'अच्कावशक्तौ' इत्यन्तोदात्तत्वं स्यात् ॥ उभे अभ्यस्तम् । अत्र द्वे इति वर्तमाने उभेग्रहणं समुदाये संज्ञाप्रतिपत्त्यर्थमिति व्याचष्टे—उभयोः सहेति । अन्यथा हि नेनिजतीत्यत्र 'अभ्यस्तानामादिः' इत्युदात्तत्वं प्रत्येकं पर्यायेण वा स्यात् ॥ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च । उत्तरसूत्रे पुन-

१. 'श्नौ सति धा' घ. पाठः. २. 'लां' ङ. च. छ. पाठः.

रादन्तत्वेऽपि 'आतश्चोपसर्गे' (३-१-१३६) इति कबाधायोक्तिः । युक् । अवस्रवतीत्यवश्यायः । आदन्तात् मायः, भायः । व्याधः । आस्रावः । संस्रावः । अनयोर्वेति भोजः । आस्रवः । संस्रवः । अत्यायोऽतिक्रमिता । अवसायो नाशकः । अवहारो ग्राहो हर्ता च । लेहः । श्लेषः । श्वासः । 'तनेर्णो वाच्यः' (वा० ३-१-१४०) । सन्तनोत्यभीष्टमिति सन्तानः सुरतरुः ।

## दुन्योरनुपसर्गे (३. १. १४२)

अनुपसर्गयोर्दुनोतिणीञोर्णः स्यात् । दावः । नायः । वेति कौमुदी । दवः । नयः । सोपसर्गात्तु प्रदवः । प्रणय इत्यजेव ।

## विभाषा ग्रहः (३. १. १४३)

ग्रहेर्णो वा । अस्य व्यवस्थितविकल्पत्वान्नक्रे ग्राहः । ज्योतिषि ग्रहः । 'भुवश्च वाच्यम्' (वा० ३-१-१४३) । भावो वस्तु । भव ईश्वरः संसारश्च ।

## गेहे कः (३. १. १४४)

ग्रहेर्गेहेऽर्थे कः । कित्त्वात् सम्प्रसारणम् । गृहम् । गृहाः । तात्स्थ्याद् गृहाः दाराः[1] ।

## शिल्पिनि ष्वुन् (३. १. १४५)

कौशलवति कर्तरि वाच्ये ष्वुन् स्यात् ।

## षः प्रत्ययस्य (१. ३. ६)

प्रत्ययस्यादिः षकार इत्संज्ञः । 'नृतिखनिरञ्जिभ्य एव ष्वुन्' (वा०३-१-१४५) । रञ्जेर्नलोपश्च । नर्तकः । खनकः । रजकः । षित्त्वात् स्त्रियां ङीष् । नर्तकीत्यादि ।

---

रनुपसर्गग्रहणादिहानुपसर्गादिति निवृत्तम् । एवञ्च तत्सम्बद्धं विभाषाग्रहणमपि निवृत्तम् । तदाह — नित्यमिति ॥ दुन्योरनुपसर्गे । वेति कौमुदीति । अन्ये तु नीसाहचर्यात् सानुबन्धकाद् दुनोतेरेव णः । दवतेश्च पचाद्यचि दव इत्याहुः । नयतेः करणसाधनेऽचि नयशब्दश्च ॥ गेहे कः । अर्थे इति । प्रत्य-

---

१. 'राः अत्रापि विभाषानुवृत्त्या गेहेऽपि ग्रह इति रविः । शि' घ. पाठः.

### गस्थकन् (३. १. १४६)

गानशिल्पी गाथकः ।

### ण्युट् च (३. १. १४७)

गाधातोः शिल्पिनि ण्युट् च स्यात् । टो ङीवर्थः । गायनः । गायनी ।

### हश्च व्रीहिकालयोः (३. १. १४८)

त्यागगत्यर्थहाधात्वोर्ण्युड् भवेद् व्रीहिकालयोः ।
निरम्बुदेशजो व्रीहिर्जलहानेन हायनः ॥

गच्छतीति हायनो वत्सरः ।

### प्रुसृल्वः समभिहारे वुन् (३. १. १४९)

समभिहारः साधुकारित्वं, तस्मिन् द्योत्ये एभ्यो वुन् । साधु गन्ता प्रवकः । स्रवकः । सृ इति माधवपाठे सरकः । लूञो लवकः ।

### आशिषि च (३. १. १५०)

आशिषि द्योत्यायां धातोः वुन् स्यात् । जयको भूयाद् भवान् ।

---

यार्थे कर्तरि गेहे सतीत्यर्थः । 'गृहपतिना संयुक्ते ञ्यः' इति निर्देशान्नोपपदम् ॥ गस्थकन् । गामादाग्रहणेष्वविशेषेऽपि 'गै शब्दे' इति धातुरिह गृह्यते, न तु 'गाङ् गता'विति । गाथकशब्दस्य गायत्यर्थविषयकशिल्पिन्येव प्रसिद्धेः । तदाह — गानशिल्पीति ॥ हश्च व्रीहिकालयोः । निरम्बुदेशज इति । केचित्तु जलादधिकं वर्धनादुदकं जहातीति हायनो व्रीहिरित्याहुः ॥ प्रुसृल्वः समभिहारे वुन् । प्रुसृल्व इति पञ्चम्याः स्थाने जस् । 'ओः सुपी'ति यणादेशः ॥ आशिषि च । अप्राप्तस्याभिलषितस्य प्राप्तुमिच्छया प्रार्थना आशीः । सा च प्रयोक्तृधर्मः । तद् दर्शयति — जयको भूयाद् भवा-

## कर्मण्यण् (३. २. १)

कर्मण्युपपदे धातोरण् स्यात् । उपपदसमासादिकं सर्वत्रोह्यम् । कुम्भं करोतीति कुम्भकारः । गन्धवाहः । श्वपाकमांसपाकादावपि न्यङ्क्वादित्वात् कुः । गन्धवहश्वपचादौ तु पचाद्यजन्तेन पुनः समासः । एवं श्रीधरभूधरचापधरादावपि । आदित्यं पश्यतीत्यादावण् नेष्टः । 'शीलिकामिभक्ष्याचरिभ्यो णः' (वा॰ ३-२-१)[१], 'ईक्षिक्षमिभ्यां च' (वा॰ ३·२·१) । एषां कर्मण्युपपदेऽणि सति स्त्रियां कुम्भकारीतिवत् ङीप् स्यादिति ण उक्तः ।

स्तुतिशीला हरिकामा फलभक्षा कानने व्रताचारा ।
तदनुग्रहप्रतीक्षा वसति द्वन्द्वक्षमा मुनिश्रेणी ॥

स्तुतिं शीलयति (हरिं कामयते) फलं भक्षयति इत्यादि कर्म[२] योज्यम् ।

## आतोऽनुपसर्गे कः (३. २. ३)

अनुपसर्गादादन्ताद् धातोः कर्मण्युपपदे कः स्यात् । कित्त्वादाल्लोपः । गोदः क्षितिपः । सोपसर्गे तु गोसन्दाय इत्यणेव ।

## ह्वावामश्च (३. २. २)

एभ्योऽणेव । शत्रुह्वायः । तन्तुवायः । धान्यमायः ।

## सुपि स्थः (३. २. ४)

सुबन्तपूर्वात् स्थाधातोः कः स्यात् । शैलस्थः । अत्र सुपीति विभज्य पूर्वेणान्वयादादन्तानां सुबन्तमात्रेऽप्युपपदे क्वचित् कः स्यात् । द्वाभ्यां करेणास्येन च पिबन् द्विपः । कच्छेन पिबन् कच्छपः । पादेन पिबन् पादपः । पुनः स्थ इत्यनेन स्थाधातोर्भावे कविधिः । शलभाना-

---

निति ॥ कर्मण्यण् । कुम्भं करोतीति कुम्भकार इति । अणि कृते 'कर्तृकर्मणोः कृती'ति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः ॥ ह्वावामश्च । वा इति 'वेञ् तन्तुसन्ताने' इत्यस्य कृतात्वस्य ग्रहणम् । नतु 'वा गतिगन्धनयोरि'त्यस्य, अकर्मकत्वात् । तद् दर्शयति— तन्तुवाय इति । एवं मा इति माङ्मेङोर्ग्रहणं, नतु 'मा मान' इत्यस्य ॥ सुपि स्थः । भाव इति । कर्तरि

---

१. 'णि परे स', २. 'दि-यो' घ. पाठः.

मुत्थानं शलभोत्थः। मुक्तोत्थः। इतः परं सकर्मकेषु कर्मणीत्यनुवृत्तिः, अन्येषु सुपीति।

## तुन्दशोकयोः परिमृजापनुदोः (३. २. ५)

अनयोः पूर्वयोः क्रमात् परिमृजापनुदोः कः स्यात्। 'अलससुखाहर्त्रोरिति वाच्यम्' (वा० ३-२-५)। अलसः तुन्दपरिमृजः। सुखकृत् शोकापनुदः। दुःखहृदेव चेत् शोकापनोदः। 'मूलविभुजादौ को वाच्यः' (वा० ३-२-५)। मूलविभुजोर्वीरुहकुमुदमहीध्राभ्रपर्भुञादयः। मूलानि विभुजति कुटिलयतीति मूलविभुजो रथः। (उर्व्यां रोहतीत्युर्वीरुहः।)कौ मोदत इति कुमुदम्। महीध्र इति गुणाभावाद् यण्। आद्युक्तेरपो भरतीत्यभ्रम्। जलरुहम्। शिरोरुहः। नखमुचकाकगुहौ हेतुकर्मणोः। स्थौल्येन मुष्टेर्बहिर्भूतत्वाद् नखविश्लेषकं नखमुचं धनुः। काकेभ्यो गूहन्त्येतानिति काकगुहास्तण्डुलाः। इति।

## प्रे दाज्ञः (३. २. ६)

प्रपूर्वाभ्यां दाज्ञाभ्यां कर्मण्युपपदे कः स्यात्। धनप्रदः। धर्मप्रज्ञः।

## समि ख्यः (३. २. ७)

कर्मपूर्वात् संख्यातेः कः। गोसंख्यः। 'आङो दश्चे'ति भोजः। चकारात् ख्याञश्च। दायादः। प्रियमाख्यातीति प्रियाख्यः।

---

पूर्वेण सिद्धेरिह 'कर्तरि कृदि'ति न सम्बध्यते। अनिर्दिष्टार्थश्च प्रत्ययः स्वार्थे। धातोः स्वार्थश्च भाव एवेत्याशयः। 'घञर्थे कविधानमि'त्येव सिद्धे नित्यसमासार्थमिदम्। अत एव शलभानामुत्थानमिति ल्युडन्तेनास्वपदविग्रहः॥ तुन्दशोकयोः परिमृजापनुदोः। अलस इति। अन्यत्र तुन्दपरिमार्ज इत्येव। दुःखहृदेवेति। यः संसारासारत्वोपदेशेन शोकमात्रमपनुदति स इत्यर्थः॥ प्रे दाज्ञः। दा इति 'गामादाग्रहणेष्वविशेष' इति दारूपाणां सर्वेषां ग्रहणम्। प्रपूर्वाभ्यामिति। अनुपसर्ग इतीहानुवर्तते। तेन केवलप्रोपसर्गपूर्वाभ्यामित्यर्थः। ततश्च गोसम्प्रदाय इत्यादावुपसर्गान्तरपूर्वस्य प्रशब्दस्य योगे

## गापोष्टक् (३. २. ८)

कर्मपूर्वयोरनुपसर्गयोर्गापिबत्योष्टक् । सामगः । टित्त्वान्ङीप् । सामगी । 'पिबतेः सुराशीध्वोरेव' (वा० ३-२-८) । सुरापी शीधुपी । अन्यत्रातोऽनुपसर्गे कः । टाप् । क्षीरपा ।

## हरतेरनुद्यमनेऽच् (३. २. ९)

हृञ उद्धरणादन्यत्रार्थेऽच् स्यात् । मनोहरः । उद्धृतौ भारहारः । 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरज् वाच्यः' (वा० ३-२-९) । शक्तिग्रहः । लाङ्गलग्रहः इत्यादि । घटी घट एव । त्सरुदण्डर्ष्टिषु च भोजः । त्सरुग्रहः दण्डग्रहः ऋष्टिग्रहः । 'सूत्रे च धार्यर्थे' (वा० ३-२-९) । सूत्रमवधारयतीति सूत्रग्रहो विद्वान् । अन्यत्राण् सूत्रग्राहस्तक्षा ।

## वयसि च (३. २. १०)

वयसि द्योत्ये हृञोऽच् । कवचहरः ।

## आङि ताच्छील्ये (३. २. ११)

आहृञस्ताच्छील्ये द्योत्येऽच् स्यात् । गन्धाहरो वायुः ।

## अर्हः (३. २. १२)

अर्हेरणि ङीप् स्यादित्यजुच्यते । पूजामर्हतीति पूजार्हा स्त्री ।

## स्तम्बकर्णयो रमिजपोः (३. २. १३)

स्तम्बेरमः । कर्णेजपः । हस्तिसूचकयोर्वाच्ययोरेवैतौ । अत्र सप्तम्या लुकि प्राप्ते,

---

अणेव ॥ गापोष्टक् । इह गा इति गायतेरेव ग्रहणं, नतु 'गाङ् गतौ' 'गा स्तुतावि'त्यनयोः अनभिधानात् । पिबतेरिति । लुग्विकरणालुग्विकरणपरिभाषया 'पा पाने' इत्यस्यैव ग्रहणं, नतु 'पा रक्षणे' इत्यस्य । तेन सुरां पाति रक्षतीति सुरापाः । अनुपसर्गयोरिति किम् । सामसङ्गायः ॥ वयसि च । उद्यमनार्थोऽयमारम्भः । कालकृता शरीरावस्था यौवनादिर्वय उच्यते । कवचहर इति । कवचोद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति । तेनासत्यपि कवचग्रहणे कवचहर इति स्यादेव ॥ आङि ताच्छील्ये । गन्धाहर इति ।

---

१. 'हृ इत्यादि । सू' ङ. च. छ. पाठः.

### तत्पुरुषे कृति बहुलम् (६. ३. १४)

तत्पुरुषसमासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुक् स्यात्।

### शमि धातोः संज्ञायाम् (३. २. १४)

शम्पूर्वाद् धातोर्नाम्न्यच् स्यात्। शङ्करः। शंवदः।

### अधिकरणे शेतेः (३. २. १५)

एतत्पूर्वाच्छीङोऽच् स्यात्। तल्पशयः। 'पार्श्वादिषु करणेष्वज् वाच्यः' (वा० ३-२-१५)। पार्श्वाभ्यां शेते पार्श्वशयः। उरःशयः। पृष्ठशयः। 'उत्तानादिषु कर्तृषु' (वा० ३-२-१५)। उत्तानः शेते उत्तानशयः। ऊर्ध्वशयः। अवाक्छयः, अवमूर्धशयः। द्वौ तुल्यार्थौ। 'दिग्धसहपूर्वाच्च' (वा० ३-२-१५)। दिग्धेन सह शेते दिग्धसहशयः। लिप्ताङ्ग एव शेत इत्यर्थः।

### चरेष्टः (३. २. १६)

चरेरधिकरणपूर्वाट्टः स्यात्। व्रजे चरन् व्रजचरः। टित्वाद् व्रजचरी।

### भिक्षासेनादायेषु च (३. २. १७)

भिक्षां चरणेनार्जयन् भिक्षाचरः। सेनायां चरन् सेनाचरः। गृहीत्वा गच्छन् भक्षयन् वा आदायचरः। चकारादनुचरी सहचरीत्यादौ टः।

### पुरोग्रतोग्रेषु सर्तेः (३. २. १८)

टः स्यात्। पुरःसरः। अग्रतःसरः। अग्रस्य 'तत्पुरुषे कृति—' (६-३-१४) इति बहुलमलुगिति माधवः। अग्रेसरः, अग्रसरः।

---

फलानपेक्षा गन्धाहरणप्रवृत्तिरस्येत्यर्थः। ताच्छील्ये किम्। भाराहारः॥ **शमि धातोः संज्ञायाम्**। धातोरिति वर्तमाने पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम्। शङ्करा नाम परिव्राजिका तच्छीला च। अत्र 'कृञो हेत्वि'ति टो मा भूत्॥ **भिक्षासेनादायेषु च**। अनधिकरणार्थ आरम्भः। **भिक्षां चरणेनार्जयन्निति**। एतेन चरतिरत्र चरणपूर्वकार्जने वर्तत इति दर्शितम्। **चरन्निति**। प्रविशन्नित्यर्थः। आदायेति ल्यबन्तः॥ **पुरोग्रतोग्रेषु सर्तेः**।

## पूर्वे कर्तरि (३. २. १९)

पूर्वः सरतीति पूर्वसरः ।

## कृञो हेतुताच्छील्यानुलोम्येषु (३. २. २०)

एषु द्योत्येषु कृञष्टः स्यात् ।
हेतौ यशस्करी विद्या शीले क्रीडाकरो हरिः ।
आनुलोम्ये कार्यकरः सचिवो भूपतेरिति ॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुरुष्षु (३. २. २१)

एषु पूर्वेषु कृञष्ट एव । दिवाशब्दस्याहनीत्यर्थे । दिवा करोति प्राणिचेष्टामिति दिवाकरः । सप्तम्यर्थाभावमते दिनं करोतीत्येवार्थः । विभाकरः । निशां करोत्युद्द्योतयतीति निशाकर इत्यादि । कारः स्वामिभागः । कारकरः । अनन्तं कर्म कुर्वन् अनन्तकरः । नान्दी मङ्गलवाद्यशब्दो रङ्गपूजा वा । लिबिर्लिपिरेव । संख्यासु एककरः, द्विकरः । जङ्घाबाहुभ्यां तत्साध्यवेगगतिसम्यक्प्रवृत्ती लक्ष्येते । 'किंयत्तद्बहुषु कृञोऽज्वे'ति कौमुदी । अचि टाप् । टे ङीप् । किङ्करा, किङ्करी

---

माधव इति । अन्ये तु अग्रशब्दस्यैदन्तत्वं निपात्यते । तेन अग्रं सरत्यग्रेण सरतीति विग्रहेऽप्यग्रेसर इत्येव । अग्रसर इति तु 'कृत्यल्युटो बहुलम्' इति समर्थनीयमित्याहुः ॥ पूर्वे कर्तरि । कर्तृवाचिनि पूर्वशब्द उपपदे सर्तेष्टः स्यात् । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ॥ कृञो हेतुताच्छील्यानुलोम्येषु । हेतुरव्यभिचारि कारणम् । आनुलोम्यमनुकूलता । द्योत्येष्विति । नोपपदेष्वित्यर्थः । अत्र तु ज्ञापकं 'शमि धातोरि'ति धातुग्रहणम् । तद्धि कृञो हेत्वादिषु टो मा भूदित्येवमर्थमिति तत्रैवोक्तम् । उपपदत्वे हि शम्युपपदेऽस्य प्राप्त्यभावादनर्थकं तत् स्यात् । अन्यत्र कुम्भकार इत्यणेव ॥ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुरुष्षु । [illegible] कौमुदीति । प्राप्य-

इत्यादि । बहुप्रवृत्तिकृद् बहुकरः, पुञ्जीकर्ता वा । दिनरजन्यादिष्वपि[1] टो भोजोक्तः । दिनकरः, रजनिकरः ।

कर्मणि भृतौ (३. २. २२)

कर्मपूर्वात् कृञो वेतने द्योत्ये टः स्यात् । वेतनार्थं चेत् कर्मकरः । नो चेत् कर्मकारः ।

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु (३. २. २३)

एषु पूर्वेषु कृञो हेत्वादौ प्राप्तष्टो न । शब्दकार इत्याद्यणेव[2] ।

स्तम्बशकृतोरिन् (३. २. २४)

अनयोः पूर्वयोः कृञ इन् । 'व्रीहिवत्सयोरिति वाच्यम्' (वा० ३-२-२४) । स्तम्बकरिः बद्धगुच्छो व्रीहिः । शकृत्करिर्वत्सः ।

हरतेर्दृतिनाथयोः पशौ (३. २. २५)

अविदारितकृत्स्नकृत्तिपात्रं दृतिः । तद्वहन् दृतिहरिः पशुः । नाथस्य वाहनभूतो नाथहरिः पशुः ।

फलेग्रहिरात्मम्भरिश्च (३. २. २६)

द्वाविन्नन्तौ । फलवान् फलेग्रहिस्तरुः । तरूणां फलेग्रहिर्मुनिरिति फलादातर्यपि[3] । आत्मम्भरिः । चकारान्मलग्रहिः पटः । रजोग्रहिर्देहः । कुक्षिम्भरिः, उदरम्भरिः ।

---

वृत्त्यादिषु तु वेति न पठ्यते । अत एव पुंयोगादन्यत्र किङ्करीत्यसाधुरिति कैयटहरदत्तादयः । पुञ्जीकर्ता वेति । एतदर्थमेव बहुशब्दस्य पृथग् ग्रहणम् । सङ्घार्थस्य सङ्ख्याग्रहणेनैव सिद्धम् ॥ **कर्मणि भृतौ** । **कर्मपूर्वादिति** । कर्मणीत्यनुवर्तमाने पुनः कर्मग्रहणात् स्वरूपपरता विज्ञायते । अतः कर्मवाचिकर्मशब्दपूर्वादित्यर्थः ॥ **हरतेर्दृतिनाथयोः पशौ** । **नाथस्य वाहनभूत इति** । केचित्तु नाथशब्दो नासारज्जुपर्याय इत्याहुः ॥ **फलेग्रहिरात्मम्भरिश्च** । **फलेग्रहिरिति** । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । **आत्मम्भरिरिति** । आत्मनो मुमागमः, भृञ इन्प्रत्ययश्च । **कुक्षिम्भरिरुदरम्भरि-**

---

१. 'पि भो' ग. पाठः २. 'त्यणे' क. ख. पाठः. ३. 'पि । च' ङ. च. छ. पाठः.

## एजेः खश् (३. २. २८)

ण्यन्तादेजेः कर्मणि पूर्वे खश् स्यात् । शित्वात् सार्वधातुकत्वेन शब्गुणौ । एजयः ।

## अरुर्द्विषदजन्तस्य मुम् (६. ३. ६७)

अरुर्द्विषतोरजन्तस्य चानव्ययस्य खिदन्त उत्तरपदे मुमागमः स्यात् । अरीन् कम्पयन् अरिमेजयो नृपः । अङ्गं शोभयन्नङ्गमेजयोऽलङ्कारः ।

## नासिकास्तनयोर्ध्माधेटोः (३. २. २९)

अनयोः पूर्वयोर्ध्माधेटोः खश् । शित्वाद् धमादेशः ।

## खित्यनव्ययस्य (६. ३. ६६)

खिदन्ते परपदेऽनव्ययस्याजन्तस्य ह्रस्वः स्यात् । पुनर्मुम् । थूत्कारैर्नासिकां शब्दयतीति नासिकन्धमो वराहः । स्तनन्धयो बालः । क्रममनादृत्य नासिकन्धयो गज इत्यपि । स्तननासिकाभ्यां तत्स्थं पयो लक्ष्यते ।

## नाडीमुष्ट्योश्च (३. २. ३०)

अनयोश्च ध्माधेटोः खश् स्यात् । अत्रापि क्रमो न । ह्रस्वः । मर्मतापी नाडिन्धमः । निःश्वसितैर्नाडीर्धमयतीति नाडिन्धमः पन्थाः

---

रिति । तथाच 'आत्मोदरकुक्षिष्वि'ति चान्द्राः पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा' इति मुरारिश्च ॥ अरुर्द्विषदजन्तस्य मुम् । वर्णग्रहणेन तदन्तविधेः सिद्धावपीह अन्तग्रहणं शुनिन्धय इत्यादौ ह्रस्वे कृते मुंप्रवृत्त्यर्थम् । तथाहि – अच्चासावन्तश्चेति विग्रहः । विशेषणस्याप्यन्तशब्दस्य सौत्रः परनिपातः । अन्तशब्दः समीपवचनः । समीपः 'खित्यनव्ययस्ये'ति सूत्रे विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते । एवं चारिमेजय इत्यादौ स्वतो ह्रस्वेऽपि मुंसिद्धये प्रथमं खिति ह्रस्वः प्रवर्तनीयः । अतोऽनवकाशो ह्रस्वनिमित्तकश्च मुं सम्पन्न इति शुनिन्धयादौ ह्रस्वेन न बाध्यते ॥ नासिकास्तनयोर्ध्माधेटोः । क्रममनादृत्येति । तथाच वार्तिकं— 'स्तने धेटो नासिकायां ध्मश्चे'ति । अत्र चका(रेण) धेडप्यनुकृष्यते ॥ नाडीमुष्ट्योश्च ।

---

१. 'ध्वलय' क. ख. पाठः.

इति भट्टिः। वेण्वादिनाडीं मुखवायुना धमतीति नाडिन्धमः स्वर्णकारः। घेटो नाडिन्धयः पिशाचः। मुष्टिं ध्वनयन् मुष्टिन्धमो मल्लः। मुष्टिपरिमितं धयतीति मुष्टिन्धयो जलस्य। पाणिं पिबन् मुष्टिन्धयो बालः इत्यपि। शुनीमुञ्जकूलास्यपुष्पेषु धेटः। शुनिन्धयः श्वबालः। मुञ्जन्धयश्चाणक्यः। कूलस्थाम्बुपानात् कूलन्धयः। आस्यन्धयः। पुष्पेऽर्थग्रहः। पुष्पन्धयः। कुसुमन्धयः। फुल्लन्धयः। 'घटीखरीखारीवातेषु च' (वा० ३-२-२९)। घटी घटः, खरी गर्दभी, तज्जलपानात् तत्क्षीरपानाच्च घटिन्धयः खरिन्धयः। खारिन्धयस्तन्मिताम्बुपायी। वातन्धयोऽहिः। घट्यादिषु ध्मश्चेष्यते। घटीं तपतीति घटिन्धमः कुलालः। उष्णसहां खरीमपि तपतीति खरिन्धम आतपः। जलस्य खारीमपि तपतीति खारिन्धमो महाग्निः। वातन्धमस्तन्निरासी वायुं तपन् वा।

> वृत्तिस्तु पर्वतेऽप्याह शक्रोष्मा पर्वतन्धमः।
> शैलान् पिबन्निवावृण्वन् मेघौघः पर्वतन्धयः॥
> अजेर्वाते जहातेस्तु शर्धे चोपपदेऽत्र खश्।
> वातं प्रति प्रधावन्तीत्येणा वातमजा इमे॥
> हाधातोः श्लौ कृते द्वित्वमाल्लोपश्च दधोक्तवत्।
> कुहोश्चुरिति चुत्वं स्यादभ्यासस्थकवर्गहोः॥
> तेन हस्य चवर्गत्वे झः स्याज्जश्त्वेन जः पुनः।
> शर्धञ्जहान्यौषधानि शर्धः पायुरवः किल॥

गर्धञ्जह इति पक्षे गर्धो लोभः।

उदि कूले रुजिवहोः (३. २. ३१)

---

क्रमो नेति। घ्यन्तस्यापूर्वनिपातस्ताच्चिह्नमिति वृत्तिः। सूत्रे चकारोऽनुक्तसमुच्चयार्थः, तत्प्रपञ्चः शुनीत्यादि। उदि कूले रुजिवहोः। ननु कूलस्येवोच्छब्दस्यापि (सप्त?) सप्तम्यन्तत्वादुपपदत्वं स्यात्। ततश्च रुजिवहिभ्यां सह यथासङ्ख्यं स्यादिति चेन्न। एवं हि सति (लोहवान्? लाघवाद्) नाडीमुष्ट्यो-

---

१. 'हां गर्दभीम' ङ. च. छ. पाठः. २. 'लखा' क. ख. पाठः. ३. 'न्। शर्ध' क. च. छ. पाठः.

उत्पूर्वयो रुजिवहोः कूले चोपपदेऽस्ति खश् ।
कूलमुद्रुज उक्षासौ महोर्मिः कूलमुद्वहः ॥

उत्क्रम्य प्रवहन्नुद्धरन् वा । रुजेस्तुदादितया शे कृते गुणाभावः ।

वहाभ्रे लिहः (३. २. ३२)

खश् स्यात् । शपि कृते,

अदिप्रभृतिभ्यः शपः (२. ४. ७२)

अदादिभ्यो धातुभ्यः परस्य शपो लुक् स्यात् । इति शबपाये खशः शित्त्वेन ङित्त्वादगुणः । वहः स्कन्धः, वहंलिहो गौः । अभ्रंलिहस्तरुः । बाहुंलिहश्च कौमुद्याम् ।

परिमाणे पचः (३. २. ३३)

प्रस्थम्पचः ।

मितनखे च (३. २. ३४)

मितम्पचो निःस्वः । मितेऽर्थग्रहादल्पम्पच इत्यपि भट्टिः । नखं तपतीति नखम्पचः पांसुरन्नं वा ।

विध्वरुषोस्तुदः (३. २. ३५)

शे कृते गुणाभावः । विधुन्तुदः । अरुषोऽन्त्यादचः परे मुमि कृते,

संयोगान्तस्य लोपः (८. २. २३)

संयोगान्तस्य पदस्यान्त्यलोपः । अरुन्तुदः । बहुतिलयोश्चाह भोजः । बहुन्तुदं वचः । तिलन्तुदं दारु ।

असूर्यललाटयोर्दृशितपोः (३. २. ३६)

क्रमात् खश् स्यात् । शप् पश्यादेशश्च । सुगुप्तत्वान्न सूर्यमपि पश्यतीत्यसूर्यम्पश्या राज्ञी । ऊर्ध्वगत्वाल्ललाटन्तपो रविः ।

---

रितिवद् उत्कूलयोरित्येव ब्रूयात् । तस्मादुदीति सत्सप्तमीत्याह — उत्पूर्वयोरिति । उद्वहशब्दार्थमाह — उत्क्रम्य प्रवहन्नुद्धरन् वेति ॥ मितनखे च । नखम्पच इत्यत्र पचिस्तापवाची, तद् दर्शयति — नखं तपतीति ॥ असूर्यललाटयोर्दृशितपोः । असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्ब

उग्रम्पश्येरम्मदपाणिन्धमाश्च (३. २. ३७)

उग्रम्पश्यः क्रूरदृष्टिरुग्रं पापं विदन्नपि ।
इरया वारिणा माद्यन् वैद्युताग्निरिरम्मदः ॥
सर्पास्पृश्यादिरोधार्थं ध्मायन्ते यत्र पाणयः ।
सोऽध्वा पाणिन्धमोऽत्राधिकरणार्थो निपातनात् ॥

चकारात् करन्धमः शुनिन्धमश्चेति कौमुदी ।

प्रियवशे वदः खच् (३. २. ३८)

प्रियंवदः । अधीनतां प्रकाशयन् वशंवदः । 'गमेः सुप्युपसङ्ख्यानम्' (वा० ३-२-३८) । मितङ्गमा तन्वी । हृदयङ्गमं वचः । पूर्वङ्गमः । नभसा गच्छन् नभसङ्गमः पक्षी । 'वाचंयमपुरन्दरौ च' (६-३-६९) इति चकारादमागमः । नभोर्थे नभसशब्दोऽप्यस्तीत्यन्ये ।

द्विषत्परयोस्तापेः (३. २. ३९)

ण्यन्तादस्मात् खच् ।

खचि ह्रस्वः (६. ४. ९४)

खच्परे णिचि परेऽङ्गस्योपधाया ह्रस्वः स्यात् । णिलोपः । द्विषतो मुमि कृतेऽन्त्यलोपः । द्विषन्तपः । परन्तपः ।

वाचि यमो व्रते (३. २. ४०)

वाक्पूर्वाद् यमेर्व्रते द्योत्ये खच् । 'वाचंयमपुरन्दरौ च' (६-३-६९) इति निपातनादमागमः । वाचंयम आस्ते ।

---

न्धादित्यभिप्रेत्याह — न सूर्यमपि पश्यतीति ॥ **उग्रम्पश्येरम्मदपाणिन्धमाश्च** । इरम्मद इत्यत्र निपातनात् श्यन् न । माद्यन् दीप्यमान इत्यर्थः ॥ **प्रियवशे वदः खच्** । खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां, शप् च मा भूत् । नन्वेवमुत्तरत्रैव क्रियतामिति चेत् । सत्यम् । इह करणादन्यत्रापि क्वचित् । तदेतद् वार्त्तिकमुखेन दर्शयति — **गमेः सुपीति** । असंज्ञार्थं चेदम् । संज्ञायां तु 'गमश्चे'ति वक्ष्यमाणेन सिध्यति ॥ **द्विषत्परयोस्तापेः** । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विष(ती ? तीं) तापयतीति द्विषतीतापः ॥ **वाचि यमो व्रते** । व्रते इति किम् । योऽशक्त्यादिना वाचं यच्छति स वाग्यामः ।

पूःसर्वयोर्दारिसहोः (३. २. ४१)

प्राग्वत् । पुरन्दरः । सर्वंसहः । 'भगे च दारेः' (वा० ३-२-४१) भगन्दरो व्याधिः ।

सर्वकूलाभ्रकरीषेषु कषः (३. २. ४२)

सर्वङ्कष इत्यादि ।

मेघर्तिभयेषु कृञः (३. २. ४३)

मेघङ्करः । ऋतिर्गतिः, ऋतिङ्करः । भयङ्करः । भयाद्यादिषु तदन्तविधिरित्यभयङ्करोऽपि ।

क्षेमप्रियमद्रेऽण् च (३. २. ४४)

एषु कृञः खज् अण् च स्यात् । क्षेमङ्करः, क्षेमकारः । इत्यादि । मद्रं मङ्गलम् । भद्रे च भोजः । भद्रङ्करः, भद्रकारः । 'क्षेमङ्करोऽरिष्टतातिः शिवतातिः शिवङ्करः' इति क्षीरस्वाम्युक्तेः शिवेऽपि ।

आशिते भुवः करणभावयोः (३. २. ४५)

आशितपूर्वाद् भुवोऽनयोरर्थयोः खच् स्यात् । आशितस्तृप्तो भवत्यनेनाशितम्भवमन्नम् । तृप्तभावश्चाशितम्भवः ।

संज्ञायां भृतॄवृजिधारिसहितपिदमः (३. २. ४६)

---

पूःसर्वयोर्दारिसहोः । इह 'दॄ विदारण' इत्यस्यैव ग्रहणम्' न 'दॄ भये' 'दृङ् आदरे' इत्येतयोरित्युपदेश इति हरदत्तः । असंज्ञार्थं सहिग्रहणम् । संज्ञायां तु 'संज्ञायां भृतॄवृजी—'ति सिद्ध्यति । भगे च दारेरिति काशिकाकृतो वाक्यम् । भाष्यादर्शनाद् बाहुलकेन भगन्दरसिद्धिरित्यन्ये ॥ क्षेमप्रियमद्रेऽण् च । वेति वाच्येऽ(ज्? ण्)ग्रहणं हेत्वादिषु टो मा भूदिति ॥ आशिते भुवः करणभावयोः । आशितम्भवमिति । यावतान्नेनातिथ्यादिस्तृप्तो भवति, तदेवमुच्यते । वासरूपविधिना ल्युडपि । आशितभवनम् । सरूपत्वाद् घञ् तु बाध्यत एवेत्याहुः ॥ संज्ञायां भृतॄवृजिधारिसहितपिदमः । अरिन्दमं

एभ्यो नाम्नि खच् स्यात् ।

विश्वम्भरा साम रथन्तराख्यं पतिंवरा चापि धनञ्जयश्च ।
शत्रुंसहः कोऽपि वसुन्धरा च शत्रुन्तपोऽरिन्दम एवमूह्यम् ॥

धुरन्धरे तु बाहुलकादनाम्न्यपि खच् । 'वाचंयम—' (६-३-६९) इत्यत्र चकारादमागमश्च ।

## गमश्च (३. २. ४७)

नाम्नि खच् स्यात् । सुतङ्गम ऋषिः । जनाद् दूरे गच्छन् जनङ्गमः श्वपचः । तुरभुजप्रवप्लवेषु गमेः खचो वा डित्त्वं वाच्यम् । डित्त्वात् 'टेः' (६-४-१४३) इति टिलोपः । 'तुर त्वरण' इत्यस्माद् 'इगुपध—' (३-१-१३५) इति के तुरो वेगी । तुरो गच्छतीति तुरङ्गः । तुरङ्गमः । भुजः कुटिलो गच्छतीति भुजङ्गः, भुजङ्गमः । प्रवङ्गः, प्रवङ्गमश्च कपिः । प्लवङ्गः, प्लवङ्गमश्च भेकः । 'विहायसो विह च' (वा० ३-२-३८) । विहङ्गः, विहङ्गमः । तुरादिषु गमेर्डश्चेष्यते । डित्त्वाट्टिलोपः । तुरगः । भुजगः । प्रवगः । प्लवगः । डे च विहादेशो वाच्यः । विहगः ।

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः (३. २. ४८)

अन्तगः । भृशं गच्छन् अत्यन्तग इत्यादि । 'सर्वत्रपन्नयोश्च' (वा० ३-२-४८) सर्वत्रगः । पन्नः पतितो गच्छतीति पन्नगः । 'उरसोऽन्त्यलोपश्च' (वा० ३-२-४८) । उरगः । 'सुदुरोरधिकरणे' (वा० ३-२-४८) । सुखेन गच्छन्त्यत्रेति सुगो मार्गः । दुर्गः । 'निसो देशे' (वा० ३-२-४८) । निर्गो देशः । 'गमेर्डोऽन्यत्रापि दृश्यत इति वाच्यम्' (वा० ३-२-४८) । आशुगः । ग्रामगः । पतगः । शेतेर्गिरौ 'डश्छन्दसि' इत्येतल्लोकेऽप्याहुः । गिरिशः ।

---

इति । अन्तर्भावितण्यर्थोऽत्र दमिरिति हरदत्तः । एवमूह्यमिति । शत्रुञ्जययुगन्धरादयोऽप्यत्रैव द्रष्टव्या इत्यर्थः ॥ गमश्च । योगविभाग उत्तरत्र गम एवानुवृत्तिर्यथा स्याद् भृतॄप्रभृतीनां मा भूदिति ॥ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । संज्ञायामिति निवृत्तम् । लोकेऽप्याहुरिति । 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इत्यादिकालिदासप्रयोगः । अन्ये त्वाहुः — यो गिरौ

---

१. 'नामभ्यः ख' ग. पाठः.

### आशिषि हनः (३. २. ४९)

आशिषि द्योत्यायां हनेर्डः स्यात् । शत्रुहो भूयाद् भवान् । 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' (वा० ३-२-४९) । इति नस्य टत्वम् । दार्वाघाटः पक्षी । 'चारौ टत्वं वा' (वा० ३-२-४९) । चार्वाघाटश्चार्वाघातो वा शूरः । 'कर्मणि संहनेर्वा' (वा० ३-२-४९) । व्रीहीन् संघातीकरोतीति व्रीहिसंघाटः, व्रीहिसंघातः ।

### अपे क्लेशतमसोः (३. २. ५०)

अनयोः पूर्वयोरपहन्तेर्डः स्यात् । क्लेशापहः । तमोपहः । ज्वरापहादा'वन्येष्वपि दृश्यत' इति वक्ष्यमाणो डः ।

### कुमारशीर्षयोर्णिनिः (३. २. ५१)

हनेरयम् । कुत्वतत्वे । कुमारघाती । शीर्षघाती ।

### लक्षणे जायापत्योष्टक् (३. २. ५२)

हनेरनयोः पूर्वयोः लक्षणे द्योत्ये टक् स्यात् ।

### गमहनजनखनघसां लोपः क्ङित्यनङि (६. ४. ९८)

गमादीनामङ्वर्जितेऽजादौ क्ङिति पर उपधाया लोपः स्यात् । हन् नकारे परे हस्य कुत्वम् । जायाघ्नोऽयमिति तल्लक्षणवान् । पतिघ्नी, पाणिरेखेति । लक्षणमात्रेऽपि । टित्त्वाद् ङीप् ।

---

शेते गिरिस्तस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः । तथाच वार्तिकम्—'तद्धितो वे'ति । तेन भाषायामपि गिरिश इति स्यादिति ॥ **आशिषि हनः** । **दारावाहन** इति । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । टविधानार्थं वचनम् । अण् तु कर्मण्यणित्येव सिद्धः ॥ **कुमारशीर्षयोर्णिनिः** । सुप्यजाताविति सिद्धे अताच्छील्यार्थमिदम् । शिरसः शीर्षभावनिपातनार्थं च ॥ **लक्षणे जायापत्योष्टक्** । लक्षणे द्योत्य इति । प्रक्रियाकौमुद्यनुसारेणैतत् । वृत्तिकारादयस्तु लक्षणशब्दस्य अर्शआद्यजन्तत्वमाश्रित्य लक्षणवति कर्तरीति व्याचख्युः । **लक्षणमात्रे**ऽपीति । हरदत्तस्तु केवले हि लक्षणे उत्तरेणैव सिद्धः प्रत्यय इत्याह । वृत्त्यादौ तु पतिघ्नी वृषली-

---

१. 'चालो' क. ख. पाठः.

## अमनुष्यकर्तृके च (३. २. ५३)

अमनुष्यकर्तृकेऽर्थे हन्तेष्टक् स्यात् । पित्तघ्नं घृतम् । पशुघ्नो व्याघ्रः । दैत्यघ्नो हरिः । मनुष्ये तु द्विषद्घातो[1] नृपः । अमनुष्ये चोरघातो हस्तीति बाहुलकादण् । मनुष्येऽपि कृतघ्नशत्रुघ्नादौ बाहुलकाट्टक् । मूलविभुजादित्वात् को वा । के टाविति भेदः ।

## शक्तौ हस्तिकवाटयोः (३. २. ५४)

अनयोः पूर्वयोः शक्तौ द्योत्यायां हन्तेष्टक् । हस्तिनं हन्तुं शक्तो हस्तिघ्नः । कवाटघ्नः । बाहौ चाह भोजः । बाहुघ्नो मल्लः ।

## पाणिघताडघौ शिल्पिनि (३. २. ५५)

पाणिघः स्यात् पाणिघाते शिल्पी तद्वच्च तालघः ।
राजघश्चोपसंख्यानं राजानं हन्ति राजघः ॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् (३. २. ५६)

अभूततद्भावरूपच्व्यर्थवृत्तिषु च्विप्रत्ययेन च रहितेष्वाढ्यादिषूपपदेषु कृञः करणेऽर्थे ख्युन् स्यात् । योरनः । खित्त्वान्मुम् । अनाढ्यमाढ्यं कर्तुं साधनभूतमाढ्यङ्करणं धनम् । सुभगङ्करणमौषधमित्यादि ।

---

त्याद्येवोदाहरणं दृश्यते ॥ अमनुष्यकर्तृके च । अमनुष्यकर्तृकेऽर्थे हन्तेरिति । अमनुष्यकर्तृके धात्वर्थे वर्तमानाद्धन्तेरित्यर्थः ॥ शक्तौ हस्तिकवाटयोः । मनुष्यकर्तृकार्थमिदम् । शक्तौ किम् । विषेण हस्तिनं हन्तीति हस्तिघातः । नन्वशक्तस्य कर्तृत्वानुपपत्तेरस्त्येव शक्तिः । सत्यम् । शक्तिग्रहणसामर्थ्यात् प्रकर्षविज्ञानादन्यनिरपेक्षं स्वबलेनैव हन्तुं या शक्तिः सा गृह्यते । कवाटघ्न इति । अटतेः पचाद्यचि 'कवं चोष्ण' इत्यत्र योगविभागात् कवादेशे कवाटशब्दसिद्धिः । प्रविशतां कं शिरः पाटयतीति व्युत्पत्त्या क(वा? पा)ट इति क्वचित् पाठः ॥ पाणिघताडघौ शिल्पिनि । पाणिताडयोरुपपदयोर्हन्तेष्टक् । टिलोपो घत्वं च निपात्यते ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । अच्वौ किम् । आढ्यीकुर्वन्त्यनेन । इह

---

1. 'द्विड्घातको' ग. पाठः.

## कर्तरि भुवः खिष्णुच्खुकञौ (३. २. ५७)

प्राग्वदाढ्यादिषु पूर्वेषु भुवः कर्तर्येतौ स्तः । आढ्यम्भविष्णुः आढ्यम्भावुक इत्यादि । अनाढ्य आढ्यो भवन्नित्यर्थः । भयाढ्यादिषु तदन्तविधिरिति महाढ्यङ्करणम् । असुभगम्भविष्णुः । शीतप्रियम्भावुकः । आद्युक्त्या[1] अन्यत्राप्युपपदे तदन्तविधेराग्नेयनाडिन्धमा इत्याहुः ।

## स्पृशोऽनुदके क्विन् (३. २. ५८)

उदके[2]शब्दवर्जिते सुप्युपपदे स्पृशेः क्विन् स्यात् । नकारः 'क्विन्प्रत्ययस्य—' (८- २- ६२) इति निर्देशार्थः । इकारो 'वेरपृक्तस्ये'त्यत्र वीत्युक्त्यर्थः । किच्वमगुणार्थम् । इति वकारमात्रं शिष्यते ।

## अपृक्त एकाल् प्रत्ययः (१. २. ४१)

## वेरपृक्तस्य (६. १. ६७)

एकाल्शेषस्य वेर्लोपः स्यात् । हस्तेन स्पृशतीति हस्तस्पृश् सौ पदत्वे ।

---

प्रतिषेधसामर्थ्याल्ल्युडपि नेति काशिका । तथाहि — आढ्यङ्करणमिति ल्युट् ख्युनोस्तुल्यम् । च्व्यन्तस्याव्ययत्वात् । अनव्ययस्येत्युक्तेः । ख्युन्यपि मुंह्रस्वौ न स्तः । ख्युन्युपपदसमासः । ल्युटि तु गतिसमासः । उभयोरपि नित्यत्वम- (व ? वि)शिष्टम् । 'टिड्ढे'ति सूत्रेण ङीपोऽपि तुल्यत्वम् । भाष्ये तु अच्वावित्युत्तरार्थमिति स्थितम् । तन्मते ल्युट् स्यादेव ॥ **स्पृशोऽनुदके क्विन् । सुप्युपपद** इति । एतेन कर्मणीति निवृत्तमिति दर्शितम् । तत्फलं दर्शयति — **हस्तेन स्पृशतीति** । ननु स्पृशेः सकर्मकत्वात् कर्मण्युपपद इत्येवोचितमिति चेद्, अत्राहुः । पूर्वसूत्रे करणानुवृत्तिभ्रमवारणार्थं कृतं कर्तृग्रहणमिहानुवर्तते । तच्च कर्तरि कृदित्युक्तेर्व्यर्थं सत् कर्तृप्रचयार्थं सम्पद्यते । कर्मण्युपपद एकः कर्ता करणादौ चापर इति कर्तृप्रचयः । एवं च सुबन्त उपपदे इति फलितम् ॥ **निर्देशार्थ इति** । न तु स्वरार्थः एकाज्भ्योऽस्य विधानात् । धृषेश्चान्तोदात्तनिपातनादिति ॥ **क्विन्प्रत्ययस्य कुः** । क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणसामर्थ्याद् क्विन् प्रत्ययो यस्मादिति बहुव्रीहिराश्रीयत इत्याह —

---

१. 'के', २. 'कव' ग. पाठः

## क्विन्प्रत्ययस्य कुः (८. २. ६२)

क्विन्प्रत्ययवतो धातोः पदत्वेऽन्त्यस्य कुर्भवेत् ।
तेन शस्य कवर्गत्वे हस्तस्पृगिति सिध्यति ॥

एवं जलं स्पृशन् जलस्पृक् । उदकशब्दे तूदकस्पर्श इत्यणेव ।

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (३. २. ५९)

ऋत्विगादीन् निपात्याञ्चादेः क्विन्नुच्यते । वसन्तादृतौ यजन् ऋत्विक् । धृष्णोतीति दधृक् । धाष्टर्यवानभिभविता वा । सृज्यत इति स्रक् । दिश्यते भेदेनोच्यत इति दिक् । उत्स्निहेरुष्णिक् छन्दः । अञ्चेः सोपपदात् क्विन् । युजिक्रुञ्चोस्तु केवलयोरेवेष्टम् । प्रान्च् क्विन् । 'अनिदिताम्—'(६-४-२४) इति नलोपः । क्विनश्च लोपः प्राच् । सौ कृते ।

## उगिदचां सर्वनामस्थानेऽधातोः (७. १. ७०)

अधातोरुगितो झलन्तस्याङ्गस्य लुप्तनकारस्याञ्चतेश्च सर्वनामस्थाने परे नुम् स्यात् । प्रान्च् पदत्वे संयोगान्तलोपः । नस्य कुत्वं ङः । प्राङ् । युजेश्च क्विनि लुप्ते, सौ ।

---

क्विन्प्रत्ययवत इति । तेन दृ(श्या ? ग्भ्या)मित्यादौ क्विबन्तस्यापि दृशेः कुत्वं स्यादेव ॥ कवर्गत्व इति । सोष्मत्वेनाघोषत्वेन च सादृश्याच्छकारस्य खकारः, तस्य जश्त्वेन गकारः । 'वावसान' इति वा चर्त्वम् ॥ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ऋत्विक्शब्दे उपपदे यजेः क्विन् प्रत्ययो निपात्यते । धृषेः क्विन् द्विर्वचनमन्तोदात्तत्वं च । सृजेः कर्मणि क्विन् अमागमश्च । दृशेः कर्मणि क्विन् । उत्पूर्वात् ष्णिहेः क्विन् । उपसर्गान्तलोपः षत्वं च । अञ्चादीनां निपातनैः सह निर्देशादलाक्षणिकं किञ्चित् कार्यमस्तीति दर्शयति—अञ्चेः सोपपदादित्यादि ॥ उगिदचां सर्वनामस्थानेऽधातोः । इहाञ्चतिग्रहणं नियमार्थं धातोश्चेद् भवत्यञ्चतेरेवेति । तेनाधातोरित्यस्याधातुपूर्वस्यापीत्यर्थः । एवं च गोमानिवाचरति गोमत्यतीति क्यजन्तात् क्विपि अल्लोपयलोपौ । नुम् । गोमान् (उ ? वृत्त्या) संप्रति धातुत्वेऽपि नुंविध्यर्थं धातु-

## युजेरसमासे (७. १. ७१)

असमस्तस्य युजेः सर्वनामस्थाने परे नुम् स्यात् । प्राग्वत् संयोगान्तलोपकुत्वे । युङ् सखा । क्रुञ्चेस्त्विह नलोपो नेष्टः । पदत्वे-ऽन्त्यलोपकुत्वे । क्रुङ् पक्षी ।

## त्यदादिषु दृशोऽनालोचने कञ्च (३. २. ६०)

दृशेर्दर्शनार्थाभावे त्यदादिषु पूर्वेषु कञ् क्विंश्च स्यात् । कञो ञकारः, कञ्क्वरप्ख्युनामित्युक्त्यर्थः । कित्त्वादगुणः । तद्दृश ।

## आ सर्वनाम्नः (६. ३. ९१)

दृग्दृशवतुषु परेषु सर्वनाम्नामन्त्यस्यात्वं स्यात् त आ दृश । दीर्घः । तादृशः । कर्मकर्त्रर्थवृत्त्या प्रकाशार्थोऽत्र दृशिरिति भाष्यकृता हरेण चोक्तम् । रूढिवशादिवार्थयोगः । स इव दृश्यते स इव प्रकाशत इति तादृशः । क्विनि तादृक् । दर्शनार्थे तु तद्दर्श इत्यणेव ।

## इदंकिमोरीश्की (६. ३. ९०)

इदंकिमोर्दृग्दृशवतुषु परेष्वेतौ स्तः । आद्यः शित्त्वादन्त्योऽनेकाल्त्वात् सर्वादेशः । ईदृशः । ईदृक् । कीदृशः । कीदृक् । 'समानान्ययोश्च कञ्क्विनौ वाच्यौ' (वा० ३-२-६०) । अन्यादृशः । अन्यादृक् ।

## दृक्दृशवतुषु (६. ३. ८९)

एषु परेषु समानस्य सः स्यात् । सदृशः । सदृक् । 'दृशेः क्सश्चेति वाच्यम्' (वा० ३-२-६०) कित्त्वादगुणः । व्रश्चादिषः । दृष् स ।

## षढोः कः सि (८. २. ४१)

षढोः सादौ प्रत्यये परे कः स्यात् । दृक् स । 'इण्कोः' (८-३-५७) इत्यधिकारे

## आदेशप्रत्यययोः (८. ३. ५९)

---

ग्रहणम् ॥ युजेरसमासे । असमास इति किम् । सुयुक् । नेष्ट इति । निपातनसाहचर्यादेवेति ज्ञेयम् ॥ आदेशप्रत्यययोः । 'सहेः साडः स' इति सूत्रात्

इण्कवर्गाभ्यां परस्यादेशरूपस्य प्रत्ययांशस्य च सकारस्य षः स्यात्। दृक्ष, 'दृक्षे चेति वाच्यम्' (वा० ६-३-८९—९१) इत्यात्वमीश् कीभावः सभावश्च । तादृक्षः । ईदृक्षः । कीदृक्षः । सदृक्षः । इत्यादि ।

भजो ण्विः (३. २. ६२)

उपसर्गेऽन्यसुबन्ते वा पूर्वे भजेर्ण्विः स्यात् । किन्वद् वेर्लोपः । णित्त्वाद् वृद्धिः । चोः कुः । कृष्णभाग् ।

वावसाने (८. ४. ५६)

अवसाने झलां वा चर्त्वं स्यात् । कृष्णभाक् कृष्णभाग् । प्रभाक् (प्रभाग्) । हव्ये वहेर्ञ्युडिष्टः । हव्यवाहनः ।

अदोऽनन्ने (३. २. ६८)

अनन्नपूर्वाददेर्विट् स्यात् । टकारो 'विड्वनो—'(६-४-४१) इत्युक्त्यर्थः । विलोपः । दस्य चर्त्वम् । घृतात् । सस्यात् । वासरूपेणाणपि । घृतादः । सस्यादः । अन्ने त्वन्नाद एव ।

क्रव्ये च (३. २. ६९)

---

स इति षष्ठ्यन्तमनुवर्तते । आदेशो विशेषणत्वेन प्रत्ययस्त्ववयवद्वारा तेन सम्बध्यते इत्यभिप्रेत्य व्याचष्टे—आदेशरूपस्य प्रत्ययांशस्य च सकारस्येति । अर्थभेदेऽप्यादेशप्रत्यययोरिति द्वन्द्वः सौत्रः । यदि त्वादेशेऽप्यवयवषष्ठ्येवाश्रीयेत, तदा बिसं बिसमित्यादावतिव्याप्तिः । आष्टमिकद्वित्वस्या(द ? दे)शरूपत्वात् । यदि तु प्रत्ययो यः सकार इति व्याख्यायेत, तदा रामेष्वित्यादावव्याप्तिः । उकारविशिष्टस्यैव प्रत्ययत्वात् । ञ्युडिष्ट इति । यद्यपि 'हव्येऽनन्तःपादम्' इति छन्दसि ञ्युड् विहितः, तथापि 'हुतभुग् दहनो हव्यवाहनः' इत्यमराद्युक्त्या भाषायामपि प्रयुज्यत इति भावः ॥ क्रव्ये च ।

---

१. 'त्वर्थ' ग. पाठः.

क्रव्ये त्वदेर्विडेव स्याद् वासरूपनिवृत्तये ।
आममांसाशने चासौ क्रव्याद् व्याघ्रादिरेव हि ॥

पक्वमांसभुक् तु शूद्रादिः क्रव्याद एव । रक्षसां तूभयथा भक्षणादुभयम् ।

दुहः कब् घश्च (३. २. ७०)

सुबन्तपूर्वाद् दुहः कबन्त्यस्य च[1] घः । कामदुघा गौः ।

आतो मनिन्क्वनिब्वनिपश्च (३. २. ७४)

आदन्तेभ्य एते स्युः । चकाराद् विजपि । इकारा उक्त्यर्थाः । मनिन् । सुदामा । सुत्रामा । क्वनिपि

दाधा घ्वदाप् (१. १. २०)

लवनशोधनार्थौ दाप्दैपौ मुक्त्वा दाधारूपा धातवो घुसंज्ञाः ।

डुदाञ्दाने च दाण् दाने देङ् त्राणे दोऽवखण्डने ।
डुधाञ् धेट् पान इत्येषां दाधारूपत्वमात्वतः ॥

घुमास्थागापाजहातिसां हलि (६. ४. ६६)

घुसंज्ञकानां मास्थादीनां च हलादौ क्ङिति परे ईत् स्यात् । सुदीवा, वेणुधीवा, क्षीरपीवा । वनिपि सुदावा । विचि सोमपाः ।

---

पूर्वेणैव सिद्धे सूत्रारम्भफलमाह — क्रव्ये त्वित्यादिना । असौ विट्प्रत्यय इत्यर्थः । 'व्याप्तं गुहाशयैः क्रूरैः क्रव्यादैः स निशाचरै'रित्याममांसभक्षे व्याघ्रादौ भक्तिप्रयोगश्चिन्त्य इति माधवः ॥ आतो मनिन्क्वनिब्वनिपश्च । अस्य छान्दसत्वेऽपि मनिनाद्यन्तानां केषाञ्चिल्लोके प्रयोगदर्शनादिहोपन्यास इति ज्ञेयम् ॥ दाधाघ्वदाप् । दारूपाश्चत्वारो धारूपौ द्वावित्याह — डुदाञि-त्यादि । अत्र द्वितीयो णित् । दाधारूपत्वमात्वत इति । देदोधेटां 'आदेच उपदेश' इत्यात्त्वेन अन्येषां प्रकृत्या दाधारूपत्वमिति ज्ञेयम् । 'लक्षणप्रतिपदो-क्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषा नेह प्रवर्तते दैपः पकारानु-बन्धकरणात् । तद्धघ्वदाबिति सामान्यग्रहणार्थम् । परिभाषाप्रवृत्तौ तु दैपः

---

१. 'घश्च का' क. ख. पाठः.

अन्येभ्योऽपि दृश्यन्ते (३. २. ७५)

अनादन्तेभ्योऽपि मनिन्नादयो दृश्यन्ते । विश्वं करोतीति विश्वकर्मा । तॄ मन्, ऋदन्तत्वादिटि प्राप्ते,

नेड्वशि कृति (७. २. ८)

वशादौ कृतीण्ण स्यात् । सुतर्मा ।

म्वोश्च (८. २. ६५)

मकारवकारयोः[1] परयोर्मान्तस्य धातोर्नत्वं स्यात् । सुगन्मा । क्वनिप्यगुणः । तुक्, कंसजित्वा । ईशेः ईश्वा । वनिप् । ओणृ अपनये ।

विड्वनोरनुनासिकस्यात् (६. ४. ४१)

अनुनासिकस्य विटि वनि[2] च परे आत्वं[3] स्यात् । ओ आ वन् । अवादेशः अवावा । घूर्णेर्णस्यात्वं घूरावा । विचि, स्रोतो वहतीति स्रोतोवह् । पदान्ते, हो ढः । जश्त्वचर्त्वे स्रोतोवट् स्रोतोवहौ । रिषिरुष्योर्विच् । गुणः रेष् रोष् पदान्ते षस्य जश्त्वं डः । चर्त्वे, रेट् । रोट् । एषु क्विप् चेद्वहेः प्रसारणमनयोरगुणश्च स्यात् । दृश्यन्त इत्युक्तेर्यथाप्रयोगमेवैते स्युः ।

क्विप् च (३. २. ७६)

केवलेभ्यः सोपपदेभ्यश्च सर्वधातुभ्यः क्विप् स्यात् । क्विन्वदस्य सर्वलोपः । कित्वादगुणः । पित्त्वात् तुक् । हृत् । प्रहृत् । पापहृत् । कंसल्ः । त्यज् कुत्वचर्त्वे, त्यक् त्यजौ । पक् पचौ । प्रविश् छशां षः । जश्त्वं डः । चर्त्वम् । प्रविट्, प्रविशौ । द्रुह्, पदत्वे, 'वा द्रुह—'(८-२-३३) इति घत्वम् । तदभावे हो ढः । ध्रुघ् ध्रुट् ।

संज्ञाया अप्रवृत्तेः किं सामान्यग्रहणार्थेन पकारानुबन्धेन ॥ क्विप् च । केवलेभ्यः सोपपदेभ्यश्चेति । एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्य पूर्वसूत्रादिहानु-

१. 'योर्मा' ग. पाठः. २. 'निपि च', ३. 'त्' क. ख. पाठः. ४. 'णं तयो' ग. पाठः. ५. 'पा' क. पाठः.

### एकाचो बशो भष् झषन्तस्य स्ध्वोः (८. २. ३७)

सकारे झलादौ ध्वे च परे पदान्ते च धातुस्थस्य झषन्तस्यैकाचः शब्दस्य बशःस्थाने भष् स्यात् । घुघ् घुद् । जश्त्वचर्त्वे घुक् घुट् । ककारान्तेभ्यः क्विब्नेष्टः । तेन शक्नोतयादीनां न । अभिरण्व् ॥

### अनुनासिकस्य क्विझलोः क्ङिति (६. ४. १५)

क्वौ झलादौ क्ङिति च परे अनुनासिकान्तस्याङ्गस्योपधाया दीर्घः स्यात् । अभिराण् । कन दीप्तौ, दीर्घः, सुकान् । पदत्वे 'नलोपः प्रातिपदिकान्तस्य' (८-२-७) इति नलोपः । सुका, सुकानौ । शमेः प्रशाम् । पदत्वे

### मो नो धातोः (८. २. ६४)

मान्तस्य धातोः पदत्वे नत्वं स्यात् । प्रशान् । कमिक्रम्योः हरिकान् वनक्रान् ।

### च्छ्वोः शूडनुनासिके च (६. ४. १९)

अनुनासिकादौ प्रत्यये क्वौ झलादौ क्ङिति च परे छस्य शः स्यात् । वस्य च ऊठ् स्यात् । विच्छ गतौ, विश् छाभावात् तुङ्-

---

वृत्तेर्लभ्यते । सुपीति तूत्तरार्थमनुवर्तत एव ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः** । झलादाविति । एतच्च वृत्त्याद्यनुसारेणोक्तम् । स्ध्वोर्ग्रहणसामर्थ्याद् झलीति निवृत्तमित्यन्ये । एकाचो धातोरिति सामानाधिकरण्येनान्वये कृत इह न स्यात् । गर्दभमाचष्टे गर्दभयति । ततः क्विप् । णिलोपः गर्धप् । अतोऽव-यवषष्ठ्येषेत्याह — धातुस्थस्येति । धातौ तदवयवत्वेन वर्तमानस्येत्यर्थः । घुक् घुडिति । अत्र व्यपदेशिवद्भावेन धात्ववयवत्वं द्रष्टव्यम् । **ककारा*न्तानां क्विब् नेष्ट इति** । स्थितं चैवं परेश्च घाङ्कयोरित्यत्र भाष्यकैयटयोः । तथा 'स्कोः संयोगाद्योरि'त्यत्र वृत्तितद्व्याख्यानेष्वपि ॥ **अनुनासिकस्य क्विझलोः क्ङिति** । झलीति क्ङितो विशेषणमिति दर्शयति— झलादौ क्ङितीति ॥ **छ्वोः शूडनु-**

---

१. 'न्व्प' ख. ग. पाठः.

---

* 'न्तेभ्यः' इति तु मूले दृश्यते ।

निवृत्तिरिति रामः। पदत्वे शस्य षः। विट् विशौ। नोपधस्य वाञ्च्छेः क्विप्। च्छस्य शः। वान् श् पदत्वे संयोगान्तलोपः। वान् वांशौ। ऊठष्ठकार 'एत्येधत्यूठ्सु' (६-१-८९) इति निर्देशार्थः। टित्त्वे त्वादौ स्यादिति ठित् कृतः। दिवेर्वस्य ऊत्वं यण् अक्षद्यूः। सिव् हारस्यूः। सेवेरूठि, अयादेशः। सयूः सेवकः।

### ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६. ४. २०)

एषां क्वादौ परे वकारस्योपधाया अप्यूठौ स्तः। द्वयोरूठोः सवर्णदीर्घः। जूः जूरौ। तूः तूरौ। स्रिवु गतिशोषणयोः। स्रूः। ऊः। मव बन्धने। मूः। जनानवतीति जन ऊ। 'एत्येधत्यूठ्सु' (६-१-८९) इति वृद्धिः। जनौः। जनावौ।

### राल्लोपः (६. ४. २१)

क्वादौ परे रेफात् परयोश्छ्वोर्लोपः स्यात्। मुर्च्छेः मुर्। पदत्वे,

### र्वोरुपधाया दीर्घ इकः (८. २. ७६)

वग्रहस्योर्ध्वसूत्रे फलम्। रान्तस्य धातोः पदान्त उपधाया इको दीर्घः स्यात्। मूः। मुरौ। तुर्वी हिंसार्थः। तुर् दीर्घः। तूः तुरौ।

### ऋत इद् धातोः (७. १. १००)

किर्। पदत्वे। कीः। किरौ।

### गमः क्वौ (६. ४. ४०)

गमेः क्वौ परेऽनुनासिकलोपः स्यात्। 'ह्रस्वस्य—' (६-१-७१) इति तुक्। अध्वगत्। गमयमतनमनादीनां क्वाविति भोजः। रिपून्

---

नासिके च। छाभावात् तुङ्निवृत्तिरिति राम इति। अकृतव्यूहपरिभाषया अन्तरङ्गोऽपि तुङ् न प्रवर्तत इति तदाशयः। अन्ये त्वाहुः— छ्वोरित्यत्र तुक्सहित एव छकारः स्थानित्वेन निर्दिष्टः। अतः (सुक्? सतुक)स्यैव छस्य शादेशः। सतुङ्निर्देशसामर्थ्याच्चालोऽन्त्यपरिभाषा नेह प्रवर्तत इति। भाष्ये चायमेव पक्षः स्थितः॥ ज्वरत्वरस्रिव्यविमवामुपधायाश्च। क्वादाविति। आदिशब्देन झलादिक्ङिद् गृह्यते।

यच्छतीति रिपुयत् । तनोतीति तत् । हरिमत् । 'ऊ च गमादीनाम्' (वा० ६-४-४०) चकारादनुनासिकलोपः । अत ऊत्वम् । अग्रेगूः । अग्रे भ्रमतीत्यग्रेभ्रूः । 'तत्पुरुषे कृति—' (६-३-१४) इत्यलुक् । 'शास आशासश्च क्वावुपधाया इत्वं वाच्यम्' (वा० ६-४-३४) । शिस् पदत्वे रुत्वं, 'र्वो—' (८-२-७६) इति दीर्घः । शीः मित्राणि शास्तीति मित्रशीः । आशासिरिच्छार्थः । आशीः प्रार्थयिता । आशिषौ । आशिषः । भावे तु सम्पदादिक्विप्याशीर्वक्ष्यते । प्रच्छादयतेः क्विपि 'णेरनिटि' (६-४-५१) इति णिलोपः । प्रच्छाद् ।

## इस्मन्त्रन्क्विषु च (६. ४. ९७)

इसि मनि त्रे क्वौ च परे छादेर्ह्रस्वः स्यात् । प्रच्छत् । सूर्यच्छत्[1] ।इसादय उणादौ । 'घुमास्था—' (६-४-६६) इतीत्वं वेणुधीः । क्षीरपीः । स्थाधातोस्तु क्विपि भाष्यप्रयोगादीत्वं न । शैलस्थाः । भूरिदासोमपादौ विच्त्वादनीत्वम् । तायृ पालने । ताय् व्, 'लोपो व्योर्वलि' (६-१-६६) इति पूर्वं लोपपदोक्तेरपृक्तलोपात् प्राग् यलोपः । पुनरपृक्तलोपः । ताः पालयिता । सोमपावदादन्तः । विरोहतीति वीरुत् वीरुधौ । न्यङ्क्वादित्वाद् घत्वदीर्घौ । अत्र घत्वं वेति कौमुद्युक्तेः हो ढः । वीरुड् । वीरुहौ । देवान् यजतीति क्विपि यजादित्वात् सम्प्रसारणम् । देवेज् । पदत्वे व्रश्चादिषः । देवेट् । देवेजौ ।

---

ज्वरत्वरोरुपधावकारात् परा । अन्येषां तु पूर्वा । शास आशासश्चेति । अत्र शासेः क्विलोपे प्रत्ययलक्षणेन हलादिक्वित्परत्वात् 'शास इदङ्हलोरि'ति सूत्रेणैवेत्वं सिध्यति । न चास्ति 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति । यत्र वर्णस्य प्राधान्येनाश्रयणं तत्रैव तत् । अत्र शास एव वाचनिकमित्त्वम् । सूत्रे (परस्मै)पदिन एव ग्रहणात् । अन्यथा(शा)स्त इत्यादावपीत्त्वं प्रसज्येत । भाष्यप्रयोगादिति । अयमर्थः— 'लोपो व्योर्वली'ति सूत्रे कार्यनिर्देशादनन्तरं कार्ये निर्देष्टव्ये पूर्वं लोपग्रहणेनायमर्थः सूच्यते । विध्यन्तरात् पूर्वमेवायं लोपः

---

१. 'धीः । स्था' ग. पाठः. २. 'प्रसा' क. ख. पाठः.

वपादेस्तु यवोब् विश्वोट् दोषवीश्च पटोत् तुकि ।
शत्रुहूर्मधुरोट् दान्तो व्रजोः काननशूरिति ॥

इति ।

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् (३. २. ६१)

'क्विप् च' (३-२-७६) इत्यस्य प्रपञ्च एवायम् ।

व्रजसदजसूर्मुरद्विट् कंसध्रुक् कामधुक् च राधायुक् ।
अखिलविदरिभिदघच्छिन्महेन्द्रजित् पातु गोपनीर्यदुराट् ॥

सम्राज् । मोऽनुस्वारे प्राप्ते ।

मो राजि समः क्वौ (८. ३. २५)

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राज् । पदत्वे । व्रश्चादिषः । सम्राट् ।

स्थः क च (३. २. ७७)

चकारात् क्विप् ।

शमिपूर्वात् सर्वधातोर्नाम्न्यजेवेति निर्णयात् ।
स्थस्त्वेतौ कक्विपावेव तत्रेत्यर्थादिहोच्यते ॥

सुखे तिष्ठतीति शंस्थः । शंस्थाश्च कश्चित् ।

---

स्यादिति । वपादेस्त्वित्यादि । यवान् वपतीति यवोप् । विश्वं वहतीति विश्वोट् । दोषान् व्ययते संवृणुत इति दोषवीः । अत्र सम्प्रसारणपरपूर्वत्वयो'र्हल' इति दीर्घः । पटं वयतीति पटोत् । तुकीति । सम्प्रसारणे कृते 'ह्रस्वस्य पिति कृती'ति तुकि सति पटोदिति रूपं स्यादित्यर्थः । शत्रून् ह्वय(त) इति शत्रुहूः । पूर्ववद् दीर्घः । मधुरं वदतीति मधुरोत् । दान्त इति । दकारान्त इत्यर्थः । व्रजे वसतीति व्रजोः । काननं श्वयति गच्छतीति काननशूः ॥ स्थः क च । केत्यविभक्तिको निर्देशः । ननु 'सुपिस्थ.' 'क्विप् चे'ति सूत्राभ्यां ककिपौ सिद्धौ तत्राह—शमीति । 'शमि धातोः संज्ञायाम्' इति सूत्रे 'धातो'-

---

१. 'र्वे स' क. ख. पाठः.

## सुप्यजातौ णिनिस्ताच्छील्ये (३. २. ७८)

अजातावनुपसर्गे सुबन्ते पूर्वे ताच्छील्येऽर्थे धातोर्णिनिः स्यात्। हरिसेवी मन्दगामी । जातौ तु न । विप्रानामन्त्रयिता । उपसर्गमात्रेऽपि न । प्रसेविता । 'उत्प्रतिभ्यामाङि सर्तेः' (वा० ३-२-७८) । उदासारी । प्रत्यासारी । 'साधुपूर्वादतच्छीलेऽपि' (वा० ३-२-७८) । साधुकारी । साधुदायी । 'ब्रह्मणि वदः' (वा० ३-२-७८) । अतच्छीलेऽपि । ब्रह्मवादी । पुत्रानत्तुं शीलवतीति णिनौ ।

## नादिन्याक्रोशे पुत्रस्य (८. ४. ४८)

आदिनीशब्दे[२] परे क्षेपे द्योत्ये पुत्रशब्दस्या'नचि चे'ति द्वित्वं न स्यात् । पुत्रादिनीयं पापा । पुत्रपुत्रादिनी पुत्रपौत्रादिनीत्यनयोश्च पुत्रशब्दस्याद्वित्वमिष्टम् । अक्षेपे तु द्वित्वं स्यात् । पुत्त्रादिनी व्याघ्री ।

## कर्तर्युपमाने (३. २. ७९)

रिति वर्तमाने पुनर्धातुग्रहणसामर्थ्याद्धि धातुमात्राद् भवन्नच्प्रत्ययो हेत्वादिकृञष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि(ब ? बा)धेतेति भावः । तत्रेति । धातुष्वित्यर्थः । नन्वेवं 'शमि धातोरि'त्यस्यानन्तरं 'स्थः क चे'ति सूत्र्यताम् । चकारेणाचि समुच्चिते सवर्णदीर्घेण शंस्था इति भविष्यति । एवं चोत्सर्गापवादयोः समानदेशतया सन्दर्भशुद्धिः । ईत्वाभावार्थं च न यतनीयमिति महल्लाघवमित्याशङ्क्याह — अर्थादिहेति । अर्थशब्दोऽत्र प्रयोजनवचनः । प्रयोजनं तु अशंस्था इत्यत्र नञ्पूर्वपदप्रकृतिस्वरासिद्धिः, अचि तु सति 'अच्कावशक्तावि'ति सूत्रेण उत्तरपदान्तोदात्तत्वापत्तेः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति शंस्थशब्दस्याजन्तत्वात् ॥ सुप्यजातौ णिनिस्ताच्छील्ये । अनुपसर्ग इति । वृत्त्यनुसारेणोक्तम् । 'उत्प्रतिभ्यामाङि सर्तेरि'ति वचनमपि तदीयमेव । भाष्यमते तु अनुपसर्ग इत्येतदत्र न सम्बध्यत एव । उक्तं च — 'सुपी'ति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् अनुपसर्ग इत्येवं तदभूत् इदं सुमात्रे यथा स्यादिति प्रसिद्धश्चोपसर्गेऽपि णिनिः । 'स बभूवोपजीविनाम्' 'पतत्यधो धाम विसारि' 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादौ । आमन्त्रयितेति ।

१. 'पा' ग. पाठः २. 'न्' कं. ख. पाठः.

उपमानभूते कर्तरि पूर्वे धातोर्णिनिः स्यात्[1]। गज इव गच्छन् गजगामी।

व्रते (३. २. ८०)

व्रते द्योत्ये धातोर्णिनिः। स्थण्डिलशयनं व्रतत्वेन कुर्वन् स्थण्डिलशायी।

बहुलमाभीक्ष्ण्ये (३. २. ८१)

आभीक्ष्ण्यं पौनःपुन्यम्। तस्मिन् द्योत्ये जातावपि सुपि पूर्वे बहुलं णिनिः स्यात्। क्षीरपायी। चापयोधी। जात्युपपदे पूर्वेणाप्राप्ते-ऽप्ययं णिनिर्ज्ञेयः। बहुलोक्तेर्यथादृष्टमेव। न सर्वत्र।

आवश्यकाधमर्ण्ययोर्णिनिः (३. ३. १७०)

अवश्यंभाव आधमर्ण्ये च द्योत्ये धातोर्णिनिः स्यात्। कारी। अवश्यंकारी। आधमर्ण्ये, शतन्दायी। वण शब्दे। अवश्यं वणतीति वाणिनी विदग्धस्त्री।

एवं निरुपपदेभ्यः स्याच्चेदावश्यके णिनिर्ज्ञेयः।
केचिद् घिनुणि भवेयुः केऽपि घञन्तादिनौ च निर्वाह्याः॥

---

ताच्छील्यस्य विवक्षितत्वात् तृन्। अत एव ब्राह्मणानामिति षष्ठी न कृता॥ कर्तर्युपमाने। अताच्छील्यार्थं जात्यर्थं च वचनम्। गजगामीति। उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम्। कर्तरि किम्। अपूपानिव भक्षयति माषान्। उपमाने किम्। गजो गच्छति। घञन्तादिनाविति। इनिरत्र मत्वर्थीयः॥

---

शुभं भूयात्।

---

1. 'निः। ग' क. ख. पाठः. २. 'तावजाताव' ग. पाठः.

# सूत्रसूची।

| पृष्ठम् | सूत्रम् | अ. | पा. | सू. |
|---|---|---|---|---|
| ८३ | ग्रहिज्यावयि— | ६ | १ | १६ |
| ८९ | ग्रहोऽलिटि दीर्घः | ७ | २ | ३७ |
| १२९ | घुमास्थागापाजहाति— | ६ | ४ | ६६ |
| ५६ | ङमो ह्रस्वादचि— | ८ | ३ | ३२ |
| ४६ | ङिच्च | १ | १ | ५३ |
| ५५ | ङ्णोः कुक् टुक् शरि | ८ | ३ | २८ |
| ७२ | चजोः कु घिण्यतोः | ७ | ३ | ५२ |
| ११४ | चरेष्टः | ३ | २ | १६ |
| २० | चादयोऽसत्त्वे | १ | ४ | ५७ |
| ८४ | चित्याग्निचित्ये च | ३ | १ | १३२ |
| ४८ | चिदिति चोपमार्थे— | ८ | २ | १०१ |
| ७१ | चुटू | १ | ३ | ७ |
| ९१ | चोः कुः | ८ | २ | ३० |
| १३१ | च्छ्वोः शूडनुनासिके च | ६ | ४ | १९ |
| २८ | छे च | ६ | १ | ७३ |
| ८७ | जनिवध्योश्च | ७ | ३ | ३५ |
| १०७ | जुहोत्यादिभ्यः श्लुः | २ | ४ | ७५ |
| १३२ | ज्वरत्वरस्रिव्यविमवा— | ६ | ४ | २० |
| १०८ | ज्वलितिकसन्तेभ्यो णः | ३ | १ | १४० |
| ५४ | झयो होऽन्यतरस्याम् | ८ | ४ | ६२ |
| २९ | झरो झरि सवर्णे | ८ | ४ | ६५ |
| ५२ | झलां जशोऽन्ते | ८ | २ | ३९ |
| ३७ | झलां जश् झशि | ८ | ४ | ५३ |
| ९० | झषस्तथोर्धोऽधः | ८ | २ | ४० |
| १०५ | टेः | ६ | ४ | १४३ |
| ५५ | डः सि धुट् | ८ | ३ | २९ |
| ९५ | ढो ढे लोपः | ८ | ३ | १३ |
| ६४ | ढ्लोपे पूर्वस्य— | ६ | ३ | १११ |
| ७४ | णेरनिटि | ६ | ४ | ५१ |
| ,, | णो नः | ६ | १ | ६५ |
| ७३ | ण्य आवश्यके | ७ | ३ | ६५ |
| ११० | ण्युट् च | ३ | १ | १४७ |

| पृष्ठम् | सूत्रम् | अ. | पा. | सू. |
|---|---|---|---|---|
| ३४ | विष्किरः शकुनिः— | ६ | १ | १५० |
| ५७ ५८ | विसर्जनीयस्य सः | ८ | ३ | ३४ |
| १२ | वृद्धिरादैच् | १ | १ | १ |
| ४१ | वृद्धिरेचि | ६ | १ | ८८ |
| १७ | वृद्धिर्यस्याचामादि— | १ | १ | ७३ |
| ८९ | वृतो वा | ७ | २ | ३८ |
| १२५ | वेरपृक्तस्य | ६ | १ | ६७ |
| ३९ | व्योर्लघुप्रयत्नतरः— | ८ | ३ | १८ |
| १३६ | व्रते | ३ | २ | ८० |
| ९१ | व्रश्चभ्रस्जसृजमृज— | ८ | २ | ३६ |
| ६८ | शकि लिङ् च | ३ | ३ | १७२ |
| ७६ | शकिसहोश्च | ३ | १ | ९९ |
| १२४ | शक्तौ हस्तिकवाटयोः | ३ | २ | ५४ |
| ११४ | शमि धातोः संज्ञायाम् | ३ | २ | १४ |
| ५८ | शर्परे विसर्जनीयः | ८ | ३ | ३५ |
| ५४ | शश्छोऽटि | ८ | ४ | ६३ |
| ५२ | शात् | ८ | ४ | ४४ |
| ८० | शास इदङ्हलोः | ६ | ४ | ३४ |
| ,, | शासिवसिघसिनां | ८ | ३ | ६० |
| ५६ | शि तुक् | ८ | ३ | ३१ |
| १०९ | शिल्पिनि ष्वुन् | ३ | १ | १४५ |
| १६ | शि सर्वनामस्थानम् | १ | १ | ४२ |
| १०६ | शे मुचादीनाम् | ७ | १ | ५९ |
| १०८ | श्नाभ्यस्तयोरातः | ६ | ४ | ११२ |
| ,, | श्याद् व्यधास्रु— | ३ | १ | १४१ |
| ,, | श्लौ | ६ | १ | १० |
| १०९ | षः प्रत्ययस्य | १ | ३ | ६ |
| १२७ | षढोः कः सि | ८ | २ | ४१ |
| २२ | षष्ठी स्थानेयोगा | १ | १ | ४९ |
| ५२ | ष्टुना ष्टुः | ८ | ४ | ४१ |
| १३ | ष्णान्ता षट् | १ | १ | २४ |

# वार्त्तिकसूची ।

| पृष्ठम् | वार्त्तिकम् | अ. | पा. | सू. |
|---|---|---|---|---|
| ७६ | चरेराङ्पूर्वादगुरौ | ३ | १ | १०० |
| १२३ | चारौ टत्वं वा | ३ | २ | ४९ |
| ३६ | णमुलप्यत्र वाच्यः | ६ | १ | १४० |
| ७६ | तकिशसिचति — | ३ | १ | ९७ |
| ५२ | तद्धितप्रत्यये परे — | ८ | ४ | ४५ |
| ३५ | तद्बृहतोः करपत्यो— | ६ | १ | १५७ |
| १०९ | तनेर्णो वाच्यः | ३ | १ | १४० |
| ७३ | त्यजेश्च न .. | ७ | ३ | ६६ |
| १२३ | दारावाहनोऽणन्तस्य — | ३ | २ | ४९ |
| ११४ | दिग्घसहपूर्वाच्च | ३ | २ | १५ |
| १२८ | दृक्षे चेति वाच्यम् | ६ | ३ | ८९-९१ |
| १२७ | दृशेः क्सश्चेति वाच्यम | ३ | २ | ६० |
| १०४ | द्वित्वं चेति वाच्यम | ६ | १ | १२ |
| १२२ | निसो देशे | ३ | २ | ४८ |
| १०९ | नृतिखनिरञ्जिभ्य | ३ | १ | १४५ |
| १०७ | नौ लिम्पेः शो वाच्यः | ३ | १ | १३८ |
| १०४ | पाटेर्णिलुक् चोक् वा — | ६ | १ | १२ |
| ८१ | पाणौ सृजेर्ण्यद्वाच्यः | ३ | १ | १२४ |
| ११४ | पार्श्वादिषु करणेष्वज् वाच्यः | ३ | २ | १५ |
| ११३ | पिबतेः सुराशीध्वोरेव | ३ | २ | ८ |
| ६४ | प्रचेतसो राजनि — | ८ | २ | ७० |
| ४२ | प्रवत्सतरकम्बल— | ६ | १ | ८९ |
| ३५ | प्रात् तुम्पतौ गवि कर्तरि | ६ | १ | १५७ |
| ४३ | प्रादूहोढोढ्येषैष्येषु | ६ | १ | ८९ |
| १३५ | ब्रह्माणि वदः | ३ | २ | ७८ |
| ११६ | भगे च दारेः | ३ | २ | ४१ |
| ४९ | भर्त्सने पर्यायेण प्लुतो वाच्यः | ८ | २ | ९५ |
| १०९ | भुवश्च वाच्यम् | ३ | १ | १४३ |
| ११२ | मूलविभुजादौ को वाच्यः | ३ | २ | ५ |
| ४१ | यणः परस्य मयो द्वे स्तः | ८ | ४ | ४७ |
| ३७ | यणो मयो द्वे स्त — | ८ | ४ | ४७ |
| ८६ | वसेस्तव्यत् कर्तरि णिच्च | ३ | १ | ९६ |

# प्रक्रियासर्वस्वे स्मृतग्रन्थादि ।

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ९ | ... | वृत्तिः | ... |
| ,, | ... | रूपावतारः | ... |
| ,, | ... | कौमुदी | ... |
| ९ | ... | ... | प्रसादकृत् |
| ११ | ... | ... | वृत्तिकृत् |
| ,, | ... | ... | माधवः |
| १२ | ... | शिक्षा | ... |
| १३ | ... | ... | भोजः |
| १६ | ... | ... | हरः |
| २५ | 'अपेक्षातोऽधिकारः' | ... | भोजः |
| २९ | ... | कौमुदी | ... |
| ,, | ... | वृत्तिः | ... |
| ३४ | ... | ... | हरः |
| ३७ | ... | ... | शाकटायनः |
| ,, | ... | ... | शाकल्यः |
| ४३ | ... | ... | माधवः |
| ४७ | ... | भाष्यम् | ... |
| ५३ | ... | वृत्तिः | ... |
| ,, | ... | ... | वासुदेवः |
| ५८ | ... | कौमुदी | ... |
| ,, | ... | विचारचिन्तामणिः | बोप्पदेवः |
| ,, | ... | मुग्धबोधः | ... |
| ,, | ... | दुर्गसिंहवृत्तिः | ... |
| ,, | ... | पाणिनीयमतदर्पणकविकल्पद्रुमौ | ... |
| ५९ | ... | ... | हरः |
| ६० | ... | टीकासर्वस्वम् | ... |
| ,, | ... | चान्द्रम् | ... |
| ,, | ... | ... | वामनः |
| ७० | ... | ... | हरः |
| ७२ | ... | कौमुदी | ... |
| ,, | ... | वृत्तिः | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ७५ | ... | .. | शङ्करः |
| ७६ | ... | कौमुदी | ... |
| ७७ | ... | .... | भट्टिः |
| ८३ | ... | कौमुदी | ... |
| ,, | ... | ... | हरः |
| ८६ | ... | भाष्यम् | ... |
| ८८ | ... | ... | माधवः |
| ८९ | 'अच एकाचोऽनूद्‌—' | ... | भोजः |
| ९० | ... | वृत्तिः | ... |
| ,, | ... | ... | वृत्तिकृत् |
| ,, | ... | कौमुदी | ... |
| ९७ ९८ | | .. | ... |
| ९९ | ... | ... | हरः |
| ,, | ... | ... | वर्धमानः |
| १०१ | 'नन्दिवाशिमदि—' | ... | भोजः |
| १०२ | ... | ... | भाष्यकृत् |
| ,, | ... | ... | भोजः |
| १०३ | 'उदन्ताद् यङो—' | कौमुदी | ... |
| १०४ | ... | ... | भोजः |
| ,, | ... | ... | माधवः |
| १०५ | 'ओ लश्च' | ... | भोजः |
| १०९ | ... | ... | ,, |
| ११३ | ... | ... | ,, |
| ११५ | 'किंयत्तद्बहुषु—' | कौमुदी | |
| ११६ | ... | ... | भोजः |
| ११८ | ... | ... | भट्टिः |
| ,, | ... | वृत्तिः | .... |
| ११९ | ... | कौमुदी | ... |
| ,, | ... | ... | भट्टिः |
| ,, | ... | ... | भोजः |
| १२० | ... | कौमुदी | ... |
| १२१ | 'क्षेमङ्करोऽरिष्टतातिः—' | ... | क्षीरस्वामी |
| १३१ | ... | ... | रामः |
| ,, | ... | ... | भोजः |
| १३३ | ... | भाष्यम् | ... |
| ,, | ... | कौमुदी | ... |

# प्रक्रियासर्वस्वव्याख्यायां स्मृतग्रन्थादि ।

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २ | 'सर्वाभिसारमिच्छन्ति —' | ... | ... |
| ,, | 'एकशतमध्वर्यु—' | ... | भाष्यकार: |
| ३ | ... | प्रक्रियाकौमुदी | ... |
| ,, | ... | मनोरमा | ... |
| ,, | ... | ... | पतञ्जलि: |
| ४ | 'अयोगवाहानाम्—' | वार्त्तिकम् | ... |
| ५ | 'आचारेऽवगल्भ—' | ,, | ... |
| ७ | 'चयो द्वितीया:' | ,, | .... |
| १३ | 'उभयोऽन्यत्र' | ,, | ... |
| १४ | 'त्वदधरमधुरमधूनि—' | ... | जयदेवः |
| ,, | 'पश्यति दिशि दिशि —' | ... | ,, |
| ,, | 'उभयमेव वदन्ति—' | ... | कालिदासः |
| ,, | 'ये च ये चोभये—' | ... | माघः |
| ,, | 'इतरस्त्वन्यनीचयो:' | ... | अमर: |
| ,, | 'सिम: कृत्स्ने च—' | निघण्टु: | ... |
| १५ | 'अन्तरमवकाशा—' | ... | अमर: |
| ,, | ... | वृत्ति: | ... |
| ,, | 'एकोऽन्यार्थे —' | ... | ... |
| ,, | 'न तु प्रियविश्वाये' | ... | हरदत्तः |
| १६ | ... | ... | भाष्यकार: |
| १७ | ... | सिद्धान्तकौमुदी | ... |
| २० | 'इदुदुपधस्य सकारस्य—' | ... | भाष्यकार: |
| २१ | ... | रघुवंश: | ... |
| ,, | ... | कुमारसम्भव: | ... |
| २२ | ... | भाष्यम् | ... |
| २८ | .. | वृत्ति: | ... |
| ,, | 'यरोऽनुनासिके—' | ... | कैयट: |
| ,, | ... | ... | माधवः |
| २९ | 'आस्से । अत्र द्वित्व—' | ... | ,, |
| ३३ | 'उरोविदारं प्रति—' | ... | माघ: |
| ३४ | ... | वृत्ति: | ... |
| ,, | ... | भाष्यम् | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ३६ | 'इकां यणां च साम्याद्—' | ... | हरदत्त |
| ,, | ... | ... | कैयटः |
| ३८ } ४० } | ... | भाष्यम् | ... |
| ४१ | ... | ... | हरदत्तः |
| ४३ | 'एधतेरपि विशेषणम्—' | ... | कैयटः |
| ,, | ... | वृत्तिः | ... |
| ५३ | ... | प्रक्रियाकौमुदी | ... |
| ,, | ... | मनोरमा | ... |
| ५६ | ... | भाष्यम् | ... |
| ५७ | ... | ... | हरदत्तः |
| ,, | ... | ... | माधवः |
| ,, | ... | वृत्तिः | ... |
| ५८ | ... | ... | बोप्पदेवः |
| ,, | ... | काशिका | ... |
| ,, | ... | न्यासः | ... |
| ,, | ... | पदमञ्जरी | ... |
| ६१ | ... | मनोरमा | ... |
| ६४ | 'पूर्वत्रासिद्धे नास्ति ...' | भाष्यम् | ... |
| ७७ | 'मृगैरजर्यं जरसो—' | ... | कालिदासः |
| ,, | 'धातुसाधन—' | ... | ... |
| ७८ | ... | वृत्तिः | ... |
| ,, | ... | भाष्यम् | ... |
| ,, | ... | शब्दकौस्तुभः | ... |
| ७९ | 'भावस्तु केवलो—' | ... | माधवः |
| ,, | 'यावत् सिद्धम्—' | ... | ... |
| ८१ | ... | ... | हरः |
| ,, | ... | माधवीयम् | ... |
| ८२ | 'उच्छ्रायसौन्दर्य—' | ... | माघः |
| ८३ | ... | ... | हरः |
| ८६ | 'हुतमयमवलीढे—' | ... | माघः |
| ९० | ... | ... | व्याघ्रभूतिः |
| ,, | ... | वृत्तिः | ... |
| ,, | ... | ... | न्यासकारः |
| ,, | ... | ... | हरदत्तः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ९४ | .... | ... | माधवः |
| ,, | ... | ... | बोप्पदेवः |
| ९८ | ... | ... | वार्त्तिककारः |
| १०२ | ... | ... | भाष्यकृत् |
| १०७ | 'न मह्यमन्त्रोत्तर —' | ... | श्रीहर्षः |
| ११५ | ... | कौमुदी | ... |
| ११६ | ... | वृत्तिः | ... |
| ,, | ... | ... | कैयटहरदत्तौ |
| ११७ | 'आत्मोदरकुक्षिषु' | .... | चान्द्राः |
| ,, | 'ज्योत्स्नाकरम्भम् —' | ... | मुरारिः |
| ,, | 'स्तने धेटो नासिकायां—' | वार्त्तिकम् | ... |
| ११८ | ... | वृत्तिः | ... |
| १२१ | 'दॄ विदारणे—' | ... | हरदत्तः |
| ,, | 'भगे च दारेः' | ... | काशिकाकृत् |
| १२२ | ... | ... | हरदत्तः |
| ,, | 'गिरिशमुप —' | ... | कालिदासः |
| १२३ | 'तद्धितो वा' | वार्त्तिकम् | .. |
| ,, | ... | प्रक्रियाकौमुदी | ... |
| ,, | ... | वृत्तिः | ... |
| ,, | ... | ... | हरदत्तः |
| ,, | ... | ... | वृत्तिकारः |
| १२५ | ... | काशिका | ... |
| ,, | 'अच्वावित्युत्तरार्थम्' | भाष्यम् | ... |
| १२८ | 'हुतभुग् दहनो हव्य —' | ... | अमरः |
| १२९ | 'व्यासं गुहाशयैः क्रूरैः —' | ... | भट्टिः |
| ,, | ... | ... | माधवः |
| १३१ | ... | वृत्तिः | ... |
| ,, | ... | भाष्यकैयटे | ... |
| १३२ | ... | भाष्यम् | ... |
| १३५ | ... | वृत्तिः | ... |
| ,, | 'स बभूवोपजीविनाम्' | ... | ... |
| ,, | 'पतत्यधो धाम —' | ... | ... |
| ,, | 'न वञ्चनीयाः —' | ... | ... |

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*), | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—**मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—**जानकीपरिणयः Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—**काणादसिद्धान्तचन्द्रिका Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—**अभिषेकनाटकम् Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—**वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—**वास्तुविद्या Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhan̈tasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53 शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—**नागानन्दम् Nangananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—**लघुस्तुति: Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (vedânta) by Rṛṣnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—**सर्वमतसंग्रह: Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—**किरातार्जुनीयम् Kiratarjuniya** (Kâvya) by Bhāravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—**मेघसन्देश: Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—**मयमतम् Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—**महार्थमञ्जरी Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—**तन्त्रसमुच्चय: Tantraasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1-6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—**तत्त्वप्रकाश: Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—**ईशानशिवगुरुदेवपद्धति: Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—**आर्यमञ्जुश्रीमूलकल्प· Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—**तन्त्रसमुच्चय: Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—**आश्वलायनगृह्यसूत्रम् Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I—1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśāna śivagurudevamiśra (Part IV, Kriyā pāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Saṅgīta) of Saṅgītâkara Pârśva-deva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1-5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirā-cārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Saṅgīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |